*By the same Author*

( 1 ) Der vedische Mensch

( Carl Winter, Heidelberg )

( 2 ) A History of the Guptas

( Oriental Book Agency, Poona )

( 3 ) Vedic Mythological Tracts

( i ) Savitṛ

( ii ) Asura Varuṇa

( iii ) Viṣṇu

( iv ) Pūṣan

( v ) Yama

( 4 ) Vedic Psychological Studies

( i ) Somatism of Vedic Psychology

( 5 ) Twenty-five Years of Vedic Studies

1917-1942 : A Survey



श्रीदेवबोधकृतमहाभारततात्पर्यटीका

# ज्ञानदीपिका

महाभारते आदिपर्व

---

# Commentary by Devabodha on the Ādiparvan of the Mahābhārata

Edited by

**R. N. Dandekar**

Bhandarkar Oriental Research Institute

POONA

**1941**

## INTRODUCTION

(1) Dr. V. S. SUKTHANKAR has proved [1] that the *Jñānadīpikā, Mahābhārata-tātparyaṭīkā*, by Devabodha is the *oldest* commentary extant on the *Mahābhārata*. As such it is most valuable both for the understanding and the constitution of the text of the Great Epic. Devabodha's commentary is far superior to Nīlakaṇṭha's, which is in common use and which is almost the *latest* commentary on the *Mahābhārata*, belonging as it does to the last quarter of the 17th century. Unlike other commentaries, the *Jñānadīpikā* is a concise ṭīkā; as a rule, it explains only the difficult words and passages in the text. But "occasionally it offers explanations of constructional obscurities and grammatical difficulties, and gives the gist of the passages; in the latter case, usually, under the citation of entire verses (i. e. half ślokas) from the text." [2] Devabodha was a well-known and highly respected Saṁnyāsī, having the title *Paramahaṁsa Parivrājakācarya*, and his commentary has been cited with approval—nay with great reverence—by all subsequent commentators like Arjunamiśra, Sarvajñanārāyaṇa and Nīlakaṇṭha among others. In fact, Arjunamiśra has based his commentary largely on that of Devabodha. Not only has Arjunamiśra given long extracts from the *Jñānadīpikā*, but he has also copied very large portions from it *verbatim*. In the opinion of Dr. SUKTHANKAR "the *Arthadīpikā* may be considered as a *revised and enlarged edition* of the *Jñānadīpikā*." [3] Important readings from the commentary of Devabodha have been cited in the Critical Edition of the *Mahābhārata* (Ed), which is being published by the Bhandarkar Oriental Research Institute. [4] For these reasons the commentary is considered to be eminently worthy of publication and the portion

---

1 *A. B. O. R. I.* Vol. XVII, pp. 185 ff.

2 SUKTHANKAR: *Prolegomena, Ādiparvan* LXX.

3 *Prolegomena* LXX.

4 Devabodha's commentary is unaccompanied by the text of the epic. It is not therefore possible to say, with any high degree of certainty, what version Devabodha followed. Several considerations referred to by Dr. SUKTHANKAR (*Prolegomena* LXX), however, "tend to show that the version of Devabodha was of the Śāradā-K type."

of the *Jñānadīpikā* dealing with the *Adiparvan* is now being published for the first time.[1] Devabodha's commentary on *Sabhā*, *Udyoga*, *Bhīṣma* and *Droṇa* is also available and the Institute intends publishing it in course of time.

(2) The present text of the *Jñānadīpikā*, the commentary of Devabodha on the *Ādiparvan* of the *Mahābhārata*, is constituted from the three manuscripts described below, which are the only ones available.

B: This Ms. belongs to the Oriental Institute, Baroda (No. 11372). It is written on paper and contains 48 leaves (= 96 pages). Each page has 10 or 11 lines and each line 40 to 45 letters. It is written in Devanāgarī and the hand-writing is uniform and fairly beautiful. The Ms. is slightly injured towards the end. The number of "granthas" is stated to be 1400. The Ms. contains details of the number of stanzas etc. in each *parvan* as given by the commentator. It is cited in the Critical Edition of the *Mahābhārata* published by the Bhandarkar Oriental Research Institute as Cd. The Ms. is undated.

b: This is another Devanāgarī Ms. of the commentary belonging to the Oriental Institute, Baroda (No. 12928). It is written on paper and contains 47 leaves. It is damaged considerably; leaves 4 and 5 are torn, and leaves 1, 2, 11 to 19, and 21 to 23 are missing. Only 33 leaves are thus available. The hand-writing is uniform and beautiful. The number of "granthas" is 1000. It is a dated Ms.; the colophon at the end reads:

इति परमहंसपरिव्राजकाचार्यभट्टारकश्रीमद्देवबोधविरचितायां भारते आदिपर्व्वणि ज्ञानदीपिकायां आदिपर्व समाप्तम् । शुभमस्तु ॥ संवत् १६४१ समये प्रथम आषाढ सुदि प्रतिपदा शनौ ॥

The date corresponds with Saturday, 28th June 1584. This Ms. is thus nearly 360 years old.

---

1 The commentary itself affords no clue to the date and identity of the author. There are several writers of the name Devabodha, Devasvāmin, Devabodhi etc., but for want of evidence it is not, at present, possible to connect them with each other. This question must therefore await further investigation.



C: This is a Ms. in the Government collection under the care of the Royal Asiatic Society of Bengal, Calcutta (No. 3397: Descriptive Catalogue, Vol. V, p. 150). It measures 12"×5" and is written on old Indian paper. It contains 54 leaves, and each page has 9 lines. The extent of this Ms. is 1075 "granthas". The script is Nāgara of the early eighteenth century. Most of the leaves of the Ms. are discoloured.

Colophon :—

इति श्रीपरमहंसपरिव्राजकाचार्य्यभट्टारकश्रीमत्सत्यबोधशिष्यस्य परमहंसपरिव्राजकाचार्य्यश्रीदेवबोध[स्य] कृतौ महाभारततात्पर्य्यटीकायां ज्ञानदीपिकायामादिपर्व्व समाप्तम् ।

(3) A comparison of these Mss. shows that Ms. B preserves the text in the completest and the least corrupt form. Ms. b appears to be merely a copy of B, with only a few changes here and there. There are not many scribal errors in these two Baroda Mss. Ms. C is obviously late (18th century?) and contains many corrupt readings and passages. It further contains many marginal notes in Śāradā script. In such places where the readings of all Mss. were corrupt, I was able to fix up the text by a reference to the commentary of Arjunamiśra, who often quotes profusely from Devabodha's commentary.

The Mss. often exhibit carelessness regarding the Saṁdhi rules. In the constituted text Saṁdhi has therefore been restored and normalized. In a few cases, however, the words are written without Saṁdhi in order to facilitate the understanding of the text. My guiding principle in this matter has always been clarity. The Mss. do not further give adhyāya and śloka numbers. I have therefore adopted in this text numbers from the Critical Edition of the Mbh. published by B. O. R. I. Within the adhyāya I have divided the text into paragraphs according to sections. Complete lines or verses from the text are given in separate lines. The *pratīkas* are printed in black type. Quotations in the text have been traced back to their original sources wherever possible, which are cited in the footnotes.

(4) The text of the commentary was first transcribed from Ms. C by Mr. B. G. Bhide Shastri, collator in the Mahābhārata

Department of the Bhandarkar Oriental Research Institute, and was subsequently compared with the original and collated with other Mss. by me. I am responsible for finally constituting the text as presented here. My grateful thanks are due to Dr. V. S. SUKTHANKAR for his kind help and advice throughout the preparation of this work. I have also to thank the authorities of the Oriental Institute, Baroda, and the Royal Asiatic Society of Bengal, Calcutta, for the loan of the Mss. in their possession.

Bhandarkar Oriental Research Institute,
Poona
September 1941

R. N. Dandekar

# महाभारते आदिपर्व

## श्रीदेवबोधकृतमहाभारततात्पर्यटीका

## ज्ञानदीपिका

ॐ नमो नारायणाय ॥ श्रीगणपतये नमः ॥

तिर्यग्वान्ति यदाज्ञयैव मरुतो यस्याज्ञया भास्करः[1]
प्रागस्ताद्रिगतागतैरहरहः खिन्नो न विश्राम्यति ।
प्रज्ञाज्योतिरुपास्यते त्रिभुवने यस्य त्रिवेदीमयं
तत्तेजः कथमप्यमेयविभवं[2] नारायणीयं नमः ॥ १ ॥

देयादङ्घ्रिः शुभानि त्रिपदपरिमितक्षोणिखण्डार्थिनो व-
स्ताद्दक्प्राकाम्यहेलाहठ(?)हसितविपद्वैभवो[3] विश्वभर्तुः ।
मेदिन्यामन्तराले भुवनपतिपुरे यौगपद्येन दृष्टे
यस्मिंश्चन्द्रार्कतारप्रकर इव सुरैः कौसुमो विप्रकीर्णः ॥२॥

दिनरजनिविभागं वर्तयन्वामदेवः
खरतुहिनकराभ्यां लोचनाभ्यां क्रमेण ।
वलयफणिफणास्त्रभ्रान्तभूमण्डलो वः
शिशिरकरकिशोरस्मेरमूर्धा[4] पुनातु ॥ ३ ॥

दग्धस्त्र्यक्षतृतीयलोचनशिखिज्वाला[5]कलापोल्कया
गौरीलोचनताण्डवैः पुनरयं पुष्पायुधः प्रीणिति[6] ।
इत्यन्योन्यजिगीषया मनसिजप्राणैर्मुहुः क्रीडतोः
पायाद्वः शिवयोः स कोऽपि महिमा रोषस्य रागस्य वा ॥४॥

वाणीमर्थमुचं[7] नमो नवरसासारैर्जगत्सिञ्चतीं
यामासाद्य रसप्लुता[8]नि सुवते वस्तूनि वस्त्वन्तरम्[9] ।

---

१ C भारतः. २ B कथमप्रमेयाद्विभवं. ३ B om from ताद्दक्प्राकाम्य° up to °भूमण्डलो वः (in stanza 3). ४ C शिशिरकरिकिशोर°. B °करकिशोरस्यैकमूर्धा. ५ B om from °शिखिज्वाला up to गौरीलोचन°. ६ C प्रीणाति. ७ C वाणीम ...र. ८ C रसप्रमानि(?). ९ B वो...न्तरम्.

यस्यामुत्पुलका[1] भवन्ति दृशदश्चेतन्ति निश्चेतसो
भावाभावविपर्ययैः सदसती यत्रार्पिते नृत्यतः ॥५॥
अनन्यानन्दनिस्यन्दसन्मात्रास्वादनिर्वृतम् ।
मोहार्णवमहा[2]पोतं कृष्णद्वैपायनं नमः ॥६॥
न दृष्ट इ[3]ति वैयासे शब्दे मा संशयं कृथाः ।
अज्ञैरज्ञातमित्येवं[4] पदं न हि न विद्यते ॥७॥
यान्युज्जहार माहेन्द्राद्व्यासो व्याकरणार्णवात् ।
शब्दरत्नानि किं ता[5]नि सन्ति पाणिनिगोष्पदे ॥८॥
मोहान्धतमसाच्छन्नसन्मार्गप्रतिपत्त[6]ये ।
निर्मिता देवबोधेन ध्रियतां ज्ञानदीपिका[7] ॥२॥

[१]

पुरुषार्थचतुष्टयसाधनस्य ब्रह्महत्यादिमहापातकप्रायश्चित्तस्य महाभारताध्ययनस्याङ्गं विदधाति **नारायणं** इति । **नारायणं** परमात्मानं पुराणेषु तथाप्रसिद्धेः । यदाह

नारायणः परोऽव्यक्तादण्डमव्यक्तसंभवम् ।*

इति । **नरं** जीवात्मानं शरीरेन्द्रियविषयोपनीतया[8] वेदनया न रमते इति व्युत्पत्त्या । **चैव**शब्दो नवाशब्दवद् अखण्डः समुच्चये । **नरोत्तमं** इति द्वयोर्विशेषणम् । नरेभ्यो जीवेभ्य उत्तमो नारायणः सदामुक्तत्वात् । नरश्चासावुत्तमश्च जीवो नरत्वयुक्तव्युत्पत्त्या[9] उत्तमत्वं परमात्मतादात्म्यम् । तावेतौ देवौ भारतप्रतिपाद्यतया **नमस्कृत्य** तद्वाचिकां वाणीं नमस्कुरुते **सरस्वतीं** इति । **देवीं** इति नदीव्यावृत्त्यर्थं विशेषणम् । जीवात्मपरमात्मानौ नरनारायणमुनिरूपेणाव[10]तीर्णौ तावप्यत्र नमस्कार्यौ गुरुरूप[11]-

१. B यस्यामुत्पुलकाद्. C यस्यामुत्पन्नकार्यं. २ C महार्णव°. ३ C स दृष्टमिति. ४ C प्राज्ञैरज्ञात°. ५ C तानि किं पदरत्नानि. ६ C °षण्मार्गप्रतिपत्तये. ७ After this C ins:

मीमांस...यद्भारतासनतमोतत्त्वप्रतिष्ठातमः
षट्तर्कास्पदमासनानि रसवाग्वाग्भद्धवृद्धादरः ।
वेदान्ताः पुरुषोपदेशगुरवः स्वस्वस्थितिप्राकृतौ
साहाय्याय जयेतिहासविधृतौ सर्वत्र वः प्रार्थ्यये ॥

८ B शरीरेन्द्रियोपनीतया. ९ C नरत्वप्रयुक्तव्युत्पत्त्या. १० C मुनिरूपिणौ अवतीर्णौ. ११ C ज्ञत्वात्.

* Manusmṛti I. 10.



त्वात् । नरनारायणमुनी कृष्णार्जुनरूपेणावतीर्णौ तावप्यत्र नमस्कार्यौ शास्त्रप्रतिपाद्यत्वात् । तावेतौ नरनारायणशब्दौ सकृदुच्चारितौ त्रितयं त्रितयं प्रतिपादयत इति तन्त्रेणैव नमस्कारत्रयमनु[1]ष्ठितं भवति । ॐ नमो नारायणाय इति परमात्ममुनिकृष्णानां नमस्कारः । ॐ नमो नराय इति जीवात्मनरार्जुनानां नमस्कारः । ॐ नमः सरस्वत्यै इति तु एकस्या वाण्या नमस्कारः । तदिदं नमस्कारत्रयं भारताध्ययनस्यावश्यकमङ्गं प्रणव इव वेदाध्ययनस्य अन्यथा पुण्यहेतुत्वाभावात् । यदाह—

क्षरत्यनोंकृतं ब्रह्म परस्ताच्च विशीर्यते ।*

इति । **नमस्कृत्य** इति अल्पसामर्थ्यादेव पूर्वकालभाविनो नमस्कारस्य करणत्वे सिद्धे **ततः** इति पञ्चम्या करणत्वाभिधानं करणत्वातिशयत्वप्रतिपादनार्थम् । **जयः** पौराणिकानां रूढ्या भारतमुच्यते । स्वपक्षस्थापनया परपक्षप्रत्याख्यानं जयः इति योगः । इह च धर्मार्थकाममोक्षस्थापनया अधर्मानर्थाकामबन्धानां तत्प्रतिपक्षाणां प्रत्याख्यानमिति योगोऽपि प्रतीयमानो न हातुमर्हति । अथ वा ब्रह्महत्यादि पञ्चमहापातकभङ्गहेतुत्वाद् भारताध्ययनस्य भारतं जय उच्यते । भारतं कृत्वैव तदध्ययनाङ्गविधानस्य[2] ज्ञाने चायमभिप्रायः । पूर्वसृष्टि[3]गतं भारतं स्मर्तव्यं मया न तु कर्तव्यमिति । अत एव भारतकर्तुरत्र नमस्कारो न दृश्यते । **आद्यं पुरुषं** (२०) इत्यादिस्तु नमस्कारः कथावतारयितुर्न कर्तुः । अस्य शास्त्रस्य प्रेक्षावत् प्रवृत्त्यङ्गविषयसंबन्धप्रयोजनानि जयसंज्ञात उपलभ्यन्ते । तथा हि धर्मार्थकाममोक्षाणां प्रतिपक्षप्रत्याख्यानेन व्यवस्थापककथाप्रस्तावकत्वात् शास्त्रं जयः[4] । अत एवाधिकारिभेदात् प्रयोजनभेदाच्च शास्त्रभेदः । धर्मार्थिनं प्रति सोपायो धर्मोऽर्थकाममोक्षफलः । अर्थार्थिनं प्रति सोपायोऽर्थो धर्मकाममोक्षफलः । कामार्थिनं प्रति सोपायः कामो मोक्षविविक्तो धर्मार्थफलभूतः । मोक्षार्थिनं प्रति धर्मार्थहेतुकः कामाद् विविक्तो मोक्षः प्रतिपाद्यते इति चतुःशास्त्री । यदाह

धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ ।†

इत्यलमतिविस्तरेण ॥

१ Mss नमस्कारत्रयत्रयं (?). C अनुष्ठानं. २ C °ध्ययनाङ्गं विदधानस्य. ३ Mss सर्वसृष्टिगतं. ४ C व्यवस्थापयच्छास्त्रं जयः.

*Cf. Manusmṛti, II. 74. † Ed. I. 56. 33

( १–१३ ) मुनिः कथामवतारयिष्यन् कथाप्रस्तावकस्य[१] कथाश्रोतृणां चाधिकारविशेषणानि **लोमहर्षणपुत्रः**[२] इत्यादिना **किमहं ब्रवीमि** इत्यन्तेन प्रतिपादयति ॥ ( १ ) पृथुनाम्नो राज्ञो यज्ञे शातक्रतवीयहविःसंस्काराद्[३] उत्पन्नं पश्यतां मुनीनामतिविस्मयाद् रोमाञ्चं[४] उत्पादितवान् इति **लोमहर्षणनामाभूत्**[५] । तस्य **पुत्रः** । **उग्रे** सुतेजसी **श्रवसी** श्रवणे यस्य । तेजश्च पुराणश्रवणजनितं पुण्यम् । **सूतः** ब्राह्मणक्षत्रियाविपरीतसंस्कारकरणात्[६] । **पौराणिकः** पुराणं वेत्त्यधीते वा इति । एतेन कथातत्त्वज्ञत्वमुक्तम्[७] । **कुलपतिः** कुलपालनात् । **सत्रे** यज्ञे ॥ ( २ ) **संशितं** [८]तीव्रं **व्रतं** येषाम् । **विनयः** उचितकारिता । **अवनतत्वं** प्रह्वत्वम् ॥ (३) **परिवव्रुः** वेष्टितवन्तः । अनेन गुरुशिष्ययोर्मेलक उक्तः ॥ (५) **निर्दिष्टं** कथितमिहोपविश इति ॥ (६) **सुखासनम्** इति प्रश्नयोग्यतामाह । **विश्रान्तं** इति अव्याकुलताम् । **प्राप्तवयाः**[९] वृद्धः ॥ ( ७ ) **विहृतः** अतिवाहितः ॥ ( १० ) **श्रुत्वाहं** इति ज्ञानस्य गुरुपूर्वकतामाह[१०] ॥ ( १३ ) **स्वस्थाः** इति श्रवणयोग्यताम् ॥

( १४–१९ ) **पुराणमिश्रिताः**[११] इत्यादिना **सूत उवाच** इत्यन्तेन अवतारणीयस्याख्यानस्य महाजनपरिग्रहादिना[१२] हेतुना महिमानमाह ॥ ( १४ ) [१३]**कथा वा धर्मसंश्रिताः**[१४] । वा इति विकल्पः ॥ (१५) [१५]**अभिपूजितं** इति महाजनपरिग्रहमाह ॥ ( १६ ) **अस्याख्यानवरिष्ठस्य** इति महत्त्वं श्रेयस्त्वं च । कथाः कथयतः धर्मसंश्रिताश्चेति विशेषः प्रश्नः । **पदवैचित्र्यं** व्याकरणसंस्कारात् । **पर्ववैचित्र्यं** अवान्तरार्थवैचित्र्यात् । **अर्थः** वाच्यो गम्यश्च । **न्यायः** युक्तिस्तर्कः । तौ **सूक्ष्मौ** सूक्ष्मबुद्धिवेद्यौ[१६] यस्य ॥ (१७) **पुण्यौ ग्रन्थार्थौ**[१७] श्रुतमात्रस्य ज्ञातमात्रस्य च पुण्यहेतुत्वात् । **संस्कारोपगतां** पुराणसंप्रदायवतीम् । **नानाशास्त्रोपबृंहितां** न्यायमीमांसादिभिरनुगृहीताम् ॥

**( १८ ) जनमेजयस्य यज्ञे [१८]यां वैशंपायन उक्तवान् ।**

१ b om कथाप्रस्तावकस्य. २ C लोमहर्षण इत्यादिना. ३ b सौमेहालिशातक्रतव्यबार्हस्पतीयहविः° C शातक्रतुरीयहविः°. ४ b कोशाश्चं (?). ५ B b कर्णौ. ६ C °संस्कारात्कारणात्. ७ B b कथातत्त्वज्ञानमुक्तम्. C °तत्त्वज्ञमुक्तम्. ८ C om तीव्रं. ९ Ed. प्रस्तावयन्. १० b ज्ञानस्य गुरु°. C गुरुपूर्वकालताम्. ११ Ed पुराणसंश्रिताः. १२ b परिग्रहादिना ( for महाजन° ). १३ C om from कथा वा up to महाजनपरिग्रहमाह. १४ Ed धर्मसंश्रिताः. १५ b अतिपूजितं. १६ C तौ सूक्ष्मौ सूक्ष्मार्थौ. १७ Ed पुण्यां. १८ Ed यां राज्ञो (for यज्ञे यां).



इति महत्यां सभायां महापुरुषेण कथिताम् ॥ ( १९ ) **वेदैश्चतुर्भिः समितां**[१] इति वेदतुल्यत्वम् । **व्यासस्याद्भुतकर्मणः** इति कर्मगौरवम् । **संहितां** इति द्वितीयविकल्पपरिग्रहः । **पुण्यां**[२] पुण्यहेतुत्वात् । **पापभयापहां**[३] पापक्षयहेतुत्वात् ॥

( २०–२२ ) कथामवतारयितुमिष्टदेवतानमस्कारेण मङ्गलमाचरति[४] **आद्यं** इत्यादिना **हरिं** इत्यन्तेन ॥ ( २० ) उत्पत्तेः प्राक्काल आदिः । तत्र भवः **आद्यः** । सर्वोत्पत्तिमतां कारणं परमात्मानम् इति यावत् । **पुरुषं** पुरि शरीरे शयनात् जीवात्मानम् इति यावत् । **ईशानं** अनभिहतेच्छम्[६] । **पुरुभिः** बहुभिः **हूतं** आवाहितं यज्ञेषु । **पुरुभिः** बहुभिः ब्रह्मेन्द्ररुद्रादिभिः सामवेदादिना **स्तुतम्** । **ऋतं** सत्यम् । **एकं** अद्वितीयम् । **अक्षरं** अविनाशि । अथ वा एकं अक्षरं वाचकं ॐतत्सद् इति रूपं यस्य । यदाह

ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।*

**ब्रह्म** व्यापकत्वात् । **व्यक्तं** शान्तघोरमूढतया दृश्यत्वात् । **अव्यक्तं**[६] अदृश्यत्वात् । **सनातनं** नित्यम् ॥ ( २१ ) **असच्च** अभावरूपतया । **विश्वं** सर्वम् । **सदसतः परं** भावाभावातिक्रान्तम् । **परावराणां स्रष्टारं** पराणां ब्रह्मादीनां अवराणां कीटकादीनां स्रष्टारम् । **पुराणं** पुरापि नवम् । **परं** प्रकृष्टम् । **अव्ययं** न व्येति इति[७] । अथ वा अव्ययमिवाव्ययम् ।

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यत्र व्येति[८] तदव्ययम् ॥**

(२२) मङ्गलं शुभम् तदावहं **मङ्गल्यम्** । **विष्णुं** व्यापकम्[९] । **वरेण्यं** वरणार्हम् । **अनघं** निष्पापम् । **शिवं**[१०] कल्याणम् । अथ वा **शिवं** महेश्वरम् । **नमस्कृत्य** प्रह्वेण वचसा विषयीकृतम् । **हृषीकं** विषयसंबद्धमिन्द्रियम् । तस्य **ईशम्** । **चराचरगुरुं** जङ्गमस्थावरप्रभुम्[११] । **हरिं** भक्तानां पापहर्तारम् ॥

१ b संहितां. BC संमितां. २ Ed. धर्म्यां. ३ b om from पापभया° up to °हेतुत्वात्. ४ C नमस्कारं आचरति. ५ After this C ins पुरुशब्दो बहुवाची. ६ C om अव्यक्तं अदृश्यत्वात्. ७ C मा व्ययतीति. ८ b मनुष्येतृ (?). ९ C पालकम्. १० Ed शुचिं ( for शिवं). ११ C जङ्गमस्थावरगुरुम्.

* Bhagavadgita VIII. 13. ** Pātañjala Mahābhāṣya I. 1. 37.

( २३–२६ ) **महर्षेः** इत्यादिना **विबुधा[1]प्रियं** इत्यन्तेन भारतं स्तौति ॥ ( २३ ) **महर्षेः** इति कर्तृगौरवात् ॥ ( २४ ) **आचख्यु[2]ः** इति व्याख्यातृगौरवात् ॥ ( २५ ) **त्रिषु लोकेषु** इति सर्वत्र प्रचारात् । यदाह

नारदोऽश्रावयद्देवानसितो देवलः पितॄन् ।
गन्धर्वयक्षरक्षांसि श्रावयामास वै शुकः ॥*

इति[3] । ज्ञायतेऽनेनेति **ज्ञानम्** । **विस्तरेर्ण[4]** लक्षसंख्यया । **समासैः** सार्धद्विशतादिसंख्यया ॥ ( २६ ) **शुभैः** श्रवणमात्रेण मङ्गलोत्पादकैः । **समयैः** आचारैः । **छन्दसा** गायत्र्यादिना । **वृत्तेन** तनुमध्यादिना । **विबुधाप्रियं** देवपण्डितयोः प्रियम् ॥

( २७–४९ ) **निष्प्रभेऽस्मिन्** इत्यादिना **संक्षेपतोऽब्रवीत्** इत्यन्तेन कार्यकारणभावेन पिण्डीकृत्य शास्त्रार्थं संक्षेपेण प्रतिपादयति ॥ ( २७ ) **निष्प्रभे** तेजःप्रभाशून्ये । **निरालोके** इन्द्रियज्ञानालोकशून्ये । **तमसा** तमोगुणेन **आवृते** । एतेन सर्वप्रमाणाभावमाह । **बृहत्** महत् । अण्डामिव अण्डं सादृश्यमुत्पत्तिहेतुत्वम् । **एकं** जीवभेदेऽपि प्रतिजीवमभिद्यमानम् । **प्रजानां** स्थावरजङ्गमानाम् । **बीजं** उपादानकारणम् । **अक्षयं** अविनाशि ॥ (२८) **युगस्य** सृष्टेः । **आदौ** प्रथमतः । **निमित्तं** कर्तृतया कारणम् । तदेव च महत्तत्त्वमिति सांख्याः । **दिव्यं** दिवि द्योतनात्मके परमात्मनि भवं इत्यागमिनः **प्रचक्षते** । **यस्मिन्** अण्डेऽधिष्ठातृतया । **श्रूयते** वेदे । **ज्योतिः** चैतन्यम् ॥ ( २९ ) **अद्भुतं** तन्मध्यगतमपि तद्गुणदोषैरस्पृष्टम् । **अचिन्त्यं** कथमेवमिति परामर्शातीतम् । **सर्वत्र समतां गतं** ब्रह्मणि कृमौ च निर्विशेषम् ॥ ( ३० ) **पितामहः** हिरण्यगर्भः । तस्य विशेषणाणि **प्रभुः एकः प्रजापतिः ब्रह्मा सुरगुरुः** इति । **प्रभुः** ईश्वरः । **एकः** तत्समाभावात् । **प्रजापतिः** प्रजोत्पादनात् । **ब्रह्मा** ब्रह्मशब्दवाच्यस्य वेदस्य विस्तारणात्[5] । **सुराणां गुरुः** हितोपदेशात् । **स्थाणुः** रुद्रः । **मनुः** प्रसिद्धः[6] । तस्य विशेषणं **परमेश्वरैः[7]** प्रजापतित्वात् ॥ ( ३१ ) **प्रचेतसः[8]** इति बहुवचनं दशसंख्याकत्वात् । **दक्षपुत्राः सप्त** ।

१ Ed विदुषां प्रियं. २ C आख्यानं. ३ B om इति. ४ Ed विस्तरैः. ५ C ब्रह्मशब्दवाच्यस्य विस्तराणां. ६ After this C ins कः वसिष्ठः. ७ Ed परमेष्ठ्यथ. ८ Ed प्राचेतसः.

* Ed. I. 1. 64.



क्रोधस्तपो दमश्चैव विक्रान्तोऽथाङ्गिरास्तथा ।
कर्दमोऽश्वश्च[1] सप्तैते पुत्रा दक्षस्य कीर्तिताः ॥

**एकविंशतिः** यथा ।

ब्रह्मा स्थाणुर्मनुर्दक्षो भृगुर्धर्मस्तपो दमः ।
मरीचिरङ्गिराश्चात्रिः पुलस्त्यः पुलहः क्रतुः ॥
वसिष्ठः परमेष्ठी च विवस्वान्सोम एव च ।
कर्दमश्चापि यः प्रोक्तः शुक्रो विक्रान्त एव च ।
एकविंशतिरुत्पन्नाः प्राक्प्रजापतयः स्मृताः[2] ॥

( ३२ ) **पुरुषः** विराट् । **विश्वेदेवाः** गणविशेषः ॥ ( ३६ ) पुनः संक्षिपति । **यदिदं** इति । दृशिः अयमुपलब्धिवचनः । प्रत्यक्षादिना यावदुपलब्धं तावदुत्पद्यते **संह्रियते[3]** चेति ॥ ( ३७ ) संहृतस्यापि पुनरुत्पत्तिरिति दृष्टान्तेन बोधयति **यथर्तौ** इति । अयं संबन्धः । **ऋतुलिङ्गानि** परभृतरुतमलयपवनकुसुमोद्गमादीनि **ऋतौ दृश्यन्ते** यानि यान्येव **तानि तान्येव** पर्यन्यप्रत्यावृत्त्या पुनरागमने दृश्यन्ते । एतेन मध्ये विनष्टानां प्रत्यभिज्ञा तद्रूपतासिद्धिरित्युक्तं दार्ष्टान्तिके योजयति । **तथा भावा युगादिषु** अतीते युगे ये दृष्टाः संप्रति युगादौ ते एव दृश्यन्ते इति ॥ ( ३८ ) दृष्टान्तदार्ष्टान्तिकाभ्यां सिद्धमर्थमुपसंहरति **एवमेतद्** इति । **अनाद्यन्तं** अपरिज्ञायमानादिभावान्तभावं इदं प्रथमताया इदमन्ततायाश्च दुरधिगमत्वात् । **भूतं** च **संहारः** च तयोः **कारकम्** । **अनादिनिधनं** उत्पत्तिविनाशरहितं । **चक्रं** सृष्टिसंहारचक्रं ॥ ( ४० ) कथापुरुषाणां वंशमवतारयति **दिवःपुत्रै[4]** इति । द्यौर्द्युलोकाधिष्ठात्री देवता अदितिर्वा । **बृहद्भानु**प्रभृतयो **रव्यन्ताः** तस्या द्वादश पुत्राः ॥ ( ४१ ) **पुरा[5]** पूर्वम् । **विवस्वतः** विवस्वन्तः छन्दोभङ्गभयाद् बिन्दुलोपः । त्रयोदशस्तेषां **सह्य[6]**नामा । **अवरः** कनीयान् ॥ ( ४६ ) **भूतस्थानानि** भुवनानि । **रहस्यं त्रिविधं[7]** शुभाशुभकर्मफलमेकं[8] भुवनानां प्रभवो द्वितीयं व्ययश्च तृतीयम् । यदाह ।

१ B कर्दमोऽणुश्च. २ After this C ins आपो द्यौरित्यादिक्रमात्. ३ Ed संक्षिप्यते. ४ Ed दिवस्पुत्रः. ५ Ed पुत्राः. ६ Ed मह्यः. ७ C om from रहस्यं त्रिविधं up to व्ययश्चैव. ८ b शुभाशुभकर्मफलात्मकं.

शुभानामशुभानां च कर्मणां च फलोदयः ।
प्रभवश्च व्ययश्चैव रहस्यं त्रिविधं स्मृतम्[1] ॥

इति । **योगो** योगशास्त्रम् । **सविज्ञानः** ससांख्यः । विज्ञायतेऽनेनेति विज्ञानं सांख्यशास्त्रम् ॥ (४८) व्याख्यैव **वैयाख्यम्** ॥ संक्षेपे हेतुमाह ॥

(५०) किमादि भारतमित्याह **मन्वादि** इति । **मनुः** आदिराजः । **आस्तीको** जरत्कारुसुतः । **उपरिचरो** वसुविशेषः । तच्चरितप्रस्तावनादि भारतमिति मुनीनां मतभेदः ॥ (५२) **तपसा** विहितेन कायसंतापेन कर्मणा । **ब्रह्मणो** वेदस्य **चर्येण** व्रतेन[2] । **व्यस्य** सहस्रसंहितारूपेण विभिद्य **इतिहासमिमं चक्रे**[3] । तुल्यतया[4] वेदव्यसनस्य इतिहासकरणे हेतुमाह । तेन वेदार्थ एव अस्मिन्नितिहासे प्रतिपत्तिलाघवार्थं निबद्ध इत्युक्तं भवति ॥ (५३) कथापुरुषाणां मुख्यानामुत्पत्तिक्रममाह **मातुर्नियोगाद्** इति । **मातुर्नियोगात्** सत्यवत्याज्ञया ॥ (५४) **क्षेत्रे** दारेषु अम्बिकायाम् ॥ (५७) **अन्तिके** समीपे ॥ (५८) **सदस्याः** सभ्याः । **कर्मान्तरे** कर्मावकाशे ॥ (५९) **धर्मशीलता** धर्मे नैसर्गिकी प्रवृत्तिः । **क्षत्तुः** विदुरस्य । **प्रज्ञां** ऊहापोहौ । उद्भूतेन तमसो[5] अवसन्नानां वाङ्मनःकायानां अवष्टम्भहेतुर्मानसो धर्मो **धृतिः** ॥ (६०) **माहात्म्यं** महाशयता । **सत्यं** यथार्थज्ञानं सर्वभूतानुपघातके वाङ्मनसी । तद्योगात्पाण्डवाः सत्याः । सत्यस्य भावः **सत्यता** सत्यमेव । **वृत्तं** आचारः ॥ (६३) **अभिरूपाः**[6] पण्डिताः ॥

(६५–६६) कथानायकप्रतिनायकयोर्युधिष्ठिरदुर्योधनयोर्जयपराजयबीजं

१ C मतम्. २ C श्रुतेन (for व्रतेन). ३ After इतिहासमिमं चक्रे, B b ins the following passage (cf. 29*):—

षट्त्रिंशतसहस्राणि1 चकारान्यां स संहिताम् ।
त्रिंशत्युत सहस्रं2 तु देवलोके प्रतिष्ठितम् ॥
पित्र्ये पञ्चदश प्रोक्तं यक्षलोके3 चतुर्दश ।
एकं शतसहस्रं तु मानुषेषु प्रतिष्ठितम् ॥ इति.

1. Ed षष्टिं शतसहस्राणि (for षट्त्रिंशत°). 2. Ed त्रिंशच्छतसहस्रं च. 3. Ed रक्षो यक्षे. ४ C om तुल्यतया. ५ b मनसा (for तमसा). ६ Ed अनुरूपेभ्यः.



धर्माधर्ममयत्वं श्लोकाभ्यां संक्षिपति । तत्र पूर्वपक्षस्य प्रथमभावित्वात्प्रतिनायकं तावदाह (६५) **दुर्योधन** इति । **मन्युमयः** क्रोधप्रचुरः । क्रोधेन च क्रियते कार्यते परेण कृतमनुमोद्यते पापमिति कारणे कार्योपचारात् मन्युः पापम् ॥

(६६) '**ब्रह्म** वेदा **ब्रह्म** तपो **ब्रह्म** ज्ञानं च शाश्वतम् ।'*

तेन त्रयमपि **मूल**मिति ॥

(६७) **युधा** संप्रहारेण । **विक्रमणेन** प्रतापेन ॥ (६८) **मृगरूपस्य** मुनेः **व्यवायो** मैथुनं तस्मिन् **निधनम्** । **कृच्छ्रां** कष्टां[1] **प्राप आपदम्**[2] । **तत्र** अरण्ये । **पार्थानां** पृथापुत्राणाम् । **आचारः** सदाचारः । तस्य **विधिः** अज्ञातस्य ज्ञापनं[3] । तस्य **क्रमः** अभ्यासक्रमः ॥ (६९) **मात्रोः** कुन्तीमाद्र्योः । **धर्मोपनिषदं** धर्मरहस्यं **प्रति** । **अभ्युपपत्तिः** सर्वात्मना प्रवृत्तिः । धर्मोपनिषत्संबन्धिनो दर्शयति **धर्मस्य** इति ॥ (७०) **तापसैः** इत्यादिना हेत्वभिधानम् ॥ (७१) **ऋषिभिः स्वयं आनीताः** । **तत्** तस्मात् । **यद्**[4] यस्मात्[5] ॥ **शिशवः** इत्यनुकम्पनीयत्वम् । **अभिरूपाः** पाण्डित्येनात्मगुणेन च । **जटिलाः** व्रतचर्यया । **ब्रह्मचारिणः** प्रथमाश्रमिणः ॥ (७२) **पुत्राश्च भ्रातरश्चेमे** धृतराष्ट्रदुर्योधनादीनाम् । **शिष्याश्च** द्रोणादीनाम् । **सुहृदः** सवयसाम् । **पाण्डवाः** पाण्डोरपत्यानि । **एते** इति प्रत्यक्षेणोपदर्शनम् । **अन्तर्हिताः** इति समर्पकाणां मुनीनां योगप्रभावातिशयख्यापनम् ॥ (७३) **शिष्टाः** अग्निहोत्राद्यनुष्ठायिनः । **वर्णाः** ब्राह्मणादयः । **पौराः** पुरवासिनः । **चुक्रुशुः** एत एत पश्यत पश्यत पाण्डवान् इति ॥ (७६) संदेहाकुलानां जनानां संदेहच्छेदार्थं[6] पाण्डवप्रवेशकाले दिव्यमद्भुतं दर्शयति **तस्मिन्** इति ॥ (७९) न कुतोऽपि भयं येषां ते **अकुतोभयाः** ॥ (८०) **शौचं** संकरवर्जनम् । **धृतिः** अवष्टम्भः । **विक्रमः** प्रतापः ॥ (८१) **शुश्रूषा** आराधनम् । **क्षान्तिः**[7] परकृते अपकारे[8] प्रतीकारबुद्धेरनुत्पादः । **विनयः** ज्येष्ठकनिष्ठेषु[9] यथोचितानुष्ठानम् ॥ (८२) **समवाये** मेलके । **भर्ता स्वयं** वृतो **वरो** यया सा ॥ (८४) **गणान्**

१ C क्लिष्टां (for कष्टां). २ B b यदापदम्. ३ b ज्ञानं (for ज्ञापनं). ४ Ed च (for यद्). ५ After this Mss ins तापसैरित्यादिना हेत्वभिधानम्. ६ C संदेहाकुलानां संदेहव्यवच्छेदार्थं. ७ Ed has कुन्त्या (not क्षान्त्या). ८ C अपराधे. ९ b ज्येष्ठसमकनिष्ठेषु.

* Anuṣṭubh stanza, perhaps a quotation.

श्रेणीः ॥ (८७) **अर्हणानि** उपायनानि ॥ (८८) **ईर्ष्या** परोत्कर्षासहिष्णुत्वम् । **मन्युः** क्रोधः ॥ (८९) **विमानं** संचारि देवसदनम् । **प्रतिमा** सदृशी[1] ॥ (९०) **अवहासितः** अवज्ञाय हसितः । **प्रस्कन्दनं** स्खलनम्[2] । **अनभिजातवत्** अपरिचितवद् अकुलीनवद् वा ॥ (९१) **भोगापेक्षया भुञ्जन्**[3] अभ्यवहरन् । **रत्नापेक्षया** धारयन्[4] । भुञ्जन्निति काकाक्षिवद् उभाभ्यां संबध्यते । **विवर्णः** सहजवर्णाच्च्युतः । **हरिणः** पाण्डुरः । **कृशः** तनुः ॥ (९२) **कोपः** क्रोधः ॥ (९३) **नातिप्रीतमनाः** कृत्रिमविवादस्य दुष्टक्षयनिमित्तयुद्धबीजत्वाद् अनुमोदनम् । **उपेक्षा** विधिनिषेधमध्यस्थता ॥ (९४) **निरस्य** अनादृत्य ॥ (९५) **जयत्सु पाण्डुपुत्रेषु** सत्सु । **सुमहदप्रियम्** इदमेव श्रुत्वा **दुर्योधनमतं** च ज्ञात्वा **अब्रवीत्** इति संबन्धः ॥ (९६) **असूया** दोषारोपो गुणेष्वपि । **मेधावी** धारणावान् । **बुद्धिमान्** ग्रहणसमर्थः[5] । **प्राज्ञसंमतः** ऊहापोहसमर्थः ॥ (९८) **कार्पण्यात्** दैन्यात् ॥ (१०२) **पश्यतां** इत्यनादरे षष्ठी ॥ (१०३) **माधवीं** मधुज्ञातिकाम् ॥ (१०४) **प्रवृष्टं** कृतवर्षम् ॥ (१०५) **अक्षवती** द्यूतसभा । **अन्वागतं** अनुगतम् ॥ (१०७) **विविधाः चेष्टाः** बाणवृष्टिसूचकवालुकाविक्षेपादिकाः ॥ (११०) **संशितं**[6] तीक्ष्णम् । **सत्यसंधं**[7] अवन्ध्यप्रतिज्ञम् ॥ (११३) **विब्रुवन्तं** विशेषेण ब्रुवन्तम् ॥ (११५) **मत्स्यराज्ञा** इति समासान्तविधेरनित्यत्वात् ॥ (११८) **माधवं** लक्ष्मीपतित्वात् । **वासुदेवं** सर्वभूतावासत्वात् । **गां** पृथ्वीम् ॥ (११९) **निग्रहः** बन्धनम् । **बहुधा** विश्वरूपाकारेण ॥ (१२३) **तौ**[8] इति तच्छब्दो वासुदेवार्जुनयोस्तत्तदद्भुतकर्मसमर्थतां स्मारयति तदिदं पदस्थं काव्यम् ॥ (१२४) **लोकान् दर्शयानं** शरीरे विश्वरूपाकारेण विवर्तमानम्[9] ॥ (१२६) **दृश्यरूपः** प्रधानभूतः ॥ (१२९) **अनुलोमाः**[10] अनुलोमगतयः । तत्र वामदक्षिणपश्चाद्वहो **वायुः** प्रयातुरनुकूलः । तथा च ।

> ईष्टो[11] वामं[12] प्रविशतो दक्षिणः प्रविविक्षतः ।
> पश्चात्संसाधयत्यर्थं पुरस्तात्प्रतिषेधकः ॥

---

१ b प्रतिमाः सदृशाः. २ C प्रस्खलनम्. ३ C om from भुञ्जन् up to धारयन्. ४ b वर्णापेक्षया पालयन्. ५ C गुणसमर्थः. ६ Ed शंसितं. ७ C om from सत्यसन्धं up to सर्वभूतावासत्वात्. ८ B b om from तौ इति up to शरीरे विश्वरूपाकारेण. ९ C वर्तमानम्. १० Ed अनुलोमो. ११ B b इष्टो. १२ C वायुः.



इति । शक्रादिष्टस्य मेघस्यानुकूलत्वात् **शक्रः**[1] अनुकूलः । **युक्तौ** संयुक्तौ । पृष्ठदेशे **अस्मान् व्याभषन्त**[2] अस्माकं[3] विरुद्धानि निमित्तान्याभषन्त अकथयन् ॥ (१३३) **यदाभिमन्युं**[4] इत्यत्र **परिवरणबालत्वहृष्टरूपत्वादीनि** अभिमन्योस्तेजोतिशयं ध्वनन्ति ॥ (१३४) **क्रोधं मुक्तं** उद्गामीकृतम् ॥ (१३६) **उपवृत्तान्** भूमौ लुठितान्[5] ॥ (१४०) **अमर्षयन्** क्षमामकृतवन्तः ॥ (१४१) **व्यंसितां** व्यर्थीकृताम् ॥ (१४५) **विकुर्वन्**[6] विक्षिपन् ॥ (१४७) **शून्यं** असहायम् । **अमर्षयन्तं**[7] द्रोणपुत्रं कृपमित्यादिना संबध्यते ॥ (१४८) **देवगुह्ये** भूमाववतरणलक्षणगुह्यदेवकार्यरूपे ॥ (१५१) **तिष्ठमानं**[8] प्रकाशयन्तम् ॥ (१५२) **मार्गान्** मण्डलानि । **मिथ्या हतं** गदायुद्धन्यायातिक्रमेण हतम् ॥ (१५३) **बीभत्सं** निन्दितम्[9] ॥ (१५४) **अनुयातेन** लक्ष्यीकृतेन ॥ (१५८) **त्रयः** कौरवाणां कृतवर्माश्वत्थामकृपाः । **सप्त**[10] **पाण्डवानां** कृष्णसात्यकिपाण्डवाः । **ध्नूना** द्वाभ्यामूना ॥ (१५९) **तमसा** स्नेहेन । **मोहः** अज्ञानम् । **संज्ञा** ज्ञानम् । **विह्वलता** क्रियासु स्खलनम् ॥ (१६२) गवल्गणस्यापत्यं **गावल्गणिः** ॥ (१६३) **उत्साहः** वीररसप्रकृतिः प्रयत्नविशेषः ॥ (१८१) **आस्तिक्यं** परलोकादिष्वस्तीति धीः । **आर्जवं** विहितेन पथा गमनम् ॥ (१८२) **ते चापि निधनं गताः** इत्यनेन निधनस्यानतिक्रमणीयतामाह ॥ (१८३) त्वत्पुत्राणां निधनातिक्रमैका कथा । प्रत्युत रोगाणामिव दुःखहेतूनां तेषां ध्वंसो न शोकाय भवितुमर्हतीत्याह **तव पुत्रा दुरात्मनः** इति । **दुरात्मनः** दुष्टमनसः । **प्रतप्ताः** दुःखाग्निकवलिताः । **मन्युना** हेतुना । **लुब्धाः** धनमित्येव परकीयेऽपि कृताभिलाषाः । **दुर्वृत्तभूयिष्ठाः** दुराचारबहुलाः ॥ (१८५) **अत्यन्तमेव निर्वृत्तिः**[11] आत्यन्तिकी दुःखनिवृत्तिः मुक्तिरिति यावत् ॥ (१८६) **तथा** तत्प्रकारेण मृतेनेति यावत् । **तद्** इत्यव्ययं तृतीयान्तं तेन चेत्यर्थः । **दैवं** प्राक्तनं कर्म[12] ॥ (१८७) **कालः** त्रुट्यादिलक्षणः कलनहेतुत्वात् ईश्वरो वा । तत्र कालस्य चेतनता सर्वकर्तृकता च प्रतीयमाना त्रुट्यादिपक्षे गौणी मुख्या पुनरी-

---

१ Ed शुक्रसूर्यौ (for वायुशक्रौ). २ C om अस्मान् व्याभाषन्त. ३ C युष्माकं. ४ C यदाभिमन्युपारिरक्षवा...हृष्टरूपरूपत्वाद् (corrupt). ५ b लिखितान्. ६ b om विकुर्वन्. ७ Ed अधर्षयन्तं. ८ Ed तिष्ठमानान्. ९ b निर्गतम् (?). १० b पञ्च (for सप्त). ११ Ed. अत्यन्तमेवानुवृत्तिः. १२ b प्रकृतकर्म (!).

श्वरपक्षे इति बुद्धा[1] येनेष्टं तेन गम्यतामिति। **मूलं** उपादानकारणम्। 'मूलप्रकृतिरविकृतिः'* इत्यादौ तथा प्रसिद्धेः॥ (१८८-१८९) **पचेति** इति कर्तृतामाह[2] स्वातन्त्र्यप्रतीतेः। **संहरति शमयते कुरुते संक्षिपते विसृजते चरति** इत्यादिषु स्वातन्त्र्यं विवक्षितम्। **अविधृतः** अनिवारितः। **समः** मित्रोदासीनादिभेदहीनः॥ (१९१) संजयवचनाद् धृतराष्ट्रे वीतशोके सति उग्रश्रवाः प्रकृतमनुवर्तयति[3] **अत्र** इति। **उपनिषद्** रहस्यम्। पुण्यहेतुत्वात् **पुण्याम्**। कासावित्याह[4] **भारताध्ययनात्** इति। **पादं** श्लोकपादम्। **श्रद्दधानस्य** आस्तिकस्य॥ (१९२) भारताध्ययनस्य पापनिवर्तकत्वे हेतुमाह **देवर्षयः** इति॥ (१९३) तस्य पुण्यहेतुत्वे हेतुमाह **स हि** इति। **सत्यं**[5] अपरोक्षतया प्रतीयमानं परोक्षतया च। तथा च श्रुतिः 'सच्च त्यच्चेति'।¶ सद् इत्यपरोक्षतया[6] त्यद् इति परोक्षतया[7] प्रतीयमानत्वात्। **ऋतं** अबाधितम्। **पवित्रं** पापक्षयहेतुत्वात्[8]॥ (१९४) **शाश्वतं** नित्यम्। **ब्रह्म** जगज्जन्मादिकारणम्। **परमं** निरुपाधि। प्रवाहनित्यतापरिहारार्थमाह **ध्रुवं**[9] इति। **ज्योतिः** ज्ञानम्। परिणामनित्यतापरिहारार्थमाह **सनातनं** इति कूटस्थमित्यर्थः॥ (१९५) **असत्** अभावरूपं प्रध्वंसादि। **सत्** भावरूपं घटादि। सदसतः प्रध्वंसं प्रध्वंसेन पुनरुत्पद्यमानम्। **संततिः** ब्राह्मणाद् ब्राह्मण इति सजातीयात्परोत्पादः। **प्रवृत्तिः** नित्यनैमित्तिककाम्यनिषिद्धतया दृष्टलक्षणा। **जन्म** प्रकृतेर्विभागः। **मृत्युः** प्रकृतावविभागः। **पुनर्भवः** लीनस्य पुनरुत्पादः॥ (१९६) आत्मानमधिकृत्य प्रवर्तते इति **अध्यात्मम्**। **भूतगुणाः** शब्दस्पर्शरूपरसगन्धाः। **अव्यक्तं** आपीतसमस्तकार्यं जगत्कारणम्॥ (१९७) **युक्ताः** अविक्षिप्ताः। **ध्यानं** तत्त्वचिन्ता। **योगः** चित्तवृत्तिनिरोधः§। **आत्मनि चेतसि**॥ (१९९) **आस्तिकः** श्रुते कृततथेतिधीः॥ (२०१) **वपुः** शरीरम्। **एतत्** इति वपुर्विशेषणम्। **सत्यं** कारणम्। **अनृतं**[10] कार्यम्। यदाह श्रुतिः 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्'‡ इति॥ (२०३)

१ b om बुद्धा. २ b पठति इति कर्तृनामाह सातत्यप्रतीतेः. ३ b प्रकृतमेव पुनरनुवर्तयति. ४ B b om from कासावित्याह up to श्लोकपादम्. C कोसावित्याह (?). ५ b om from सत्यं up to तथा च श्रुतिः. C om from अपरोक्षतया up to त्यच्चेति. ६ b om सद् इति अपरोक्षतया. ७ C om त्यद् इति परोक्षतया. ८ b पापक्षये हेतुमाह. ९ C om from ध्रुवं इति up to परिणामनित्यतापरिहारार्थमाह. १० Ed अमृतं.

* Sāṁkhyakārikā 3.
¶ Taitt. Up. II. 6. 1.
§ Pāt. Yogasūtra. I. 2.
‡ Ch. Up. 1, 4.



**अन्ततः** असंभवे॥ (२०४) भारताध्ययनस्य प्रयोजनान्तरमाह **इतिहासेति**। **इतिहासः** पुरावृत्तम्। **पुराणं** पञ्चलक्षणम्।* **उपबृंहणं** अर्थान्तरकल्पनया क्षीणस्य यथावद्व्याख्यानेन परिपोषः॥ (२०५) फलान्तरमाह **कार्ष्णं वेदं** इति। कृष्णो व्यासः कृष्णवर्णत्वाद्विष्णुत्वाद्वा। कृष्णस्यायं **कार्ष्णः** तत्कृतत्वात्। विद्यते ज्ञायते धर्मार्थकाममोक्षतत्त्वं सोपायमनेनेति **वेदः**। **अर्थः** चतुर्वर्गः। **भ्रूणः** बालः गर्भगतो वा। स्वशाखाध्यायी ब्राह्मणो वा॥ (१९१–२०९) **अत्रोपनिषदं** इत्यादिना

**निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते।**

इत्यन्तेन भारताध्ययनस्य प्रयोजनमाह॥

(२१०) यो न श्रद्धत्ते तं प्रत्याह। **तपो न कल्कः** इति। **तपः** चान्द्रायणादि। **अध्ययनं** ब्रह्मयज्ञः। **स्वाभाविकः** जातिकृतः। **वेदविधिः** वेदविहितो यज्ञदानहोमादिरिति त्रयाणां वर्णानां साधारणो धर्मः। **प्रसह्य वित्ताहरणं** इति। क्षत्रियस्य प्रसह्य बलात्कारेण हरणं ग्रहणम्। एतानि तावत्तपःप्रभृतीनि **न कल्कः** नासारः। यद्वा **न कल्कः** न पापम्। **तान्येव भावोपहतानि**। **भावः** अश्रद्धा अन्यथैवेदमन्यथापि स्यादिदमिति वा बुद्धिः। तया **उपहतानि** प्रतिबद्धपुण्यसाधनभावानि वा **कल्कः**[1]। एतेन तपःप्रभृतीनि भावदूषितानि[2] यथा न श्रेयःसाधनानि[3] तथा भारताध्ययनमपि। **तान्येव च भाव**शुद्धानि यथा श्रेयःसाधनानि तथेदमपीति विवक्षितं मुनेः॥

॥ आदिपर्वणि अनुक्रमणिका॥

[ २ ]

(२) **शुश्रूषा** श्रोतुमिच्छा। **मे** मम **ब्रुवतो**[4] मयि ब्रुवति सति॥ (३) **पार्थिवं** पृथिवीभवम्। **क्षत्रं** क्षत्रियजातीयम्। (६) **निषिषिधुः**[5] निषिद्धवन्तः। एकाक्षराधिक्येऽपि[6] न छन्दोभङ्गः तथापि प्रयोगदर्शनात्। अथ वा **सिषिधुः**

१ C reads योगउपहताविप्रतिबद्धपुण्यसाधनतया निराकल्कः (corrupt). २ C दूषितानि (for भावदूषितानि). ३ b निःश्रेयःसाधनानि (for न श्रेयः°). ४ Ed ब्रुवतश्च (for ब्रुवतो मे). ५ Ed सिषिधुः ६ C om from एकाक्षरा° up to शिक्षितवन्तः.

* Amarakośa I. 6. 5.

इति पाठः । सिषिधुः शिक्षितवन्तः । अथ वा षिधिरयं[1] निषेधार्थः निषिद्धवन्तः इत्यर्थः ॥ (९) **अन्तरे** संधौ ॥ (१०) **भूदोषाः** निम्नोन्नतत्वादयः ॥ (१४) **अक्षौहिणीमानं** निगदव्याख्यानम् । **रथस्थगजस्थपुरुषाणां** अक्षौहिणी-संख्यायाम् गणितत्वाद्[2] युद्धहतानां नराणां वक्ष्यमाणयातिबह्व्या संख्यया न विरोधः ॥ (२५) **कालेन** ईश्वरेण ॥ (२८) हृदिकस्य पुत्रः **हार्दिक्यः**[3] कृतवर्मा । **गौतमः** कृपः ॥ (३०) **अभिपन्नं** अङ्गीकृतं । **वैराग्यं** रागद्वेष-मध्यस्थता ॥ (३१) **आत्मेव** प्रत्यगात्मेव । **वेदितव्येषु** ज्ञेयेषु । एतेन दुर्ज्ञेयत्वं ज्ञानस्य च महाफलत्वम् । प्रधीयते सर्वमस्मिन्निति **प्रधानं** परमात्मा । स एव **अर्थः** प्रतिपाद्यः[4] ॥ (३२) **अर्पिता** निहिता । स्तौति[5] **उत्तमा** इति । **वाक्** पदरूपतया । यथा लौकिकी वैदिकी च । **स्वरव्यञ्जन**समुदायरूपत्वात्तत्रार्पिता । **तर्पिता** इति पाठे तृप्तिर्निराकाङ्क्षता ॥ (३४) **पौष्यं** सौदासस्य कर्माभिदायकं पर्व । **पर्व** एकेनार्थेनारम्भावसानसंधिः[6] । सर्वेषां पर्वणां संक्षिप्तेनादिशब्दवाच्येनार्थे-नावच्छिन्नत्वाद्[7] आदिपर्वसंक्षेपो हि विस्तरस्यादिः । सभालक्षणेनार्थेन एकेनारम्भा-वसानसंधिः[8] अवच्छिन्नत्वात् सभापर्व । एवमन्यत्रापि बोद्धव्यम् । शतपर्वी तु संज्ञा-निमित्ते नार्थेनावच्छिन्ना ॥ (३८) ह्रियते[9] इति **हरणं** स्वसृदायः । **हारिका** तदानयनम्[10] ॥ (४५) आसनं आस्या समं सह **समास्या**[11] ॥ (६९) उक्तं पुनरुपक्रान्तं **खिलं** इत्यभिधीयते* ॥ (७०-७१) इति **शतपर्वैव** कथावतारकेण **लोमहर्षणिना अष्टादशपर्व**तया संगृहीता ॥ (१०१) **कितवः** द्यूतकारः ॥ (११८) **सोमपीथी**[12] सोमपायी ॥ (११९) **पुत्रेण** पशुना ॥ (१२८*) न्यायं वेत्त्यधीते च इति **नैयायिकः** ॥ (१३०) **बहुलां**[13] कृष्णां **शमीम्** । **विपुलां** इति वा पाठः । **संन्यदधुः**[14] सम्यग्निहितवन्तः ॥ (१४१) **चिन्ता** प्रत्ययप्रवाहः ॥ (१४३) आत्मानमधीकृत्य वर्तते इति **अध्यात्मम्** । **शोके**

१ C श्रुतिरयं. २ C °संख्यायां अननुप्रवेशादतिबह्व्या संख्यया न विरोधः. ३ Mss om हार्दिक्यः. ४ C प्रतिपादितः. ५ B b om from स्तौति up to तर्पिता. ६ b एकेनार्थे-नावस्थावसानसंधिः. C °सिद्धिः (for °संधिः). ७ B b अविच्छिन्नत्वात् (for अवच्छिन्नत्वात्). ८ C °सिद्धिः (for °संधिः). After this C repeats the passage from सर्वेषां पर्वणां up to विस्तरस्यादिः. ९ C om from ह्रियते up to तदानयनम्. १० After this B b ins अन्तमृतमनन्तरमृतं (?). ११ Ed समस्या (for समास्या). १२ C om from सोमपीथी up to सम्यग्निहितवन्तः. १३ Ed विपुलां. १४ Ed संनिदधुः.

* part of anuṣṭubh stanza, perhaps a quotation.



**लालसा** अभिलाषो यस्य ॥ (१४४) **समितिः** सभा । **ऐकात्म्यं** एकात्मता ॥ (१३१) **छद्म** व्याजम् ॥ (१३६) **उपप्लव्ये** विराटनगरे ॥ (१४७) **राजसु** नृपेषु । **राजसं** इति वा पाठः रजोगुणास्पदम् ॥ (१३७) **नौ** आवयोः ॥ (१३९) **वव्रे** वृतवान् ॥ (१४८) मन्त्रितात् **अनु** पश्चात् **मन्त्रितः** गुप्ते भाषितः । **शौटीर्यं**[1] सत्यभाषितागर्वः । पञ्चम्यन्तस्य प्रत्याख्याने हेतुमाह ॥ (१५६) **कश्मलः** तामसो भावः । **मोहजं** मिथ्याज्ञानजम् ॥ (१५९) चतुर्भिरधिकाशीतिः **चतुराशीतिः**[2] ॥ (१६०) **अपनिन्युः** बहिष्कृतवन्तः ॥ (१६१) **शान्तः**[3] प्राणैर्निगृहीतः ॥ (१७०) **आक्षेपः** निन्दा ॥ (१७५) **धर्मो राजा** यस्य ॥ (१७७) **श्लोकाग्रं** श्लोकसंख्या । **यशोभृता**[4] यशः-पोषकेण ॥ (१८०) **प्रतिजज्ञे** प्रतिज्ञातवान् । **दंशनं** कवचम् ॥ (१८२) **अमुच्यन्त** मुक्ताः ॥ (१८३) **अनशनं** अभोजनम् । **उपाविशत्** उप-रुद्धवती । **उपालभत्** इति वा पाठः ॥ (१८५) **दैवं** प्राक्तनं[5] कर्म ॥ (१९२) **क्षत्रियाः**[6] क्षत्रियस्त्रियः । **दिष्टान्तात्** दैवात् । **आनिवृत्तिः** मरणं तत्त्वतः । **दृष्टान्तानानिवर्तिनः** इति पाठे दृष्टोऽन्तोऽवसानं यैः अत एव अनि-वर्तिनः । समरादिति शेषः ॥ (२०१) **प्रकृतिं** स्वभावम् ॥ (२०२) **धर्मार्थीयो** धर्मार्थयोर्हितः ॥ (२०४) **भीष्मस्वर्गयोः संप्राप्तिः** संबन्धः अतः संबन्धे षष्ठ्यौ ॥ (२०९) **पुत्रिका** पुत्रत्वेन कल्पिता ॥ (२२१) **आपाने** पानगोष्ठ्याम् । **एरका** प्रस्तरहेतुस्तृणविशेषः ॥ (२२२) **समं** बालवृद्धेश्वरदरिद्रेषु तुल्यम् ॥ (२२३) **विषादः** शोकावस्था । **आर्तिः**[7] भयम् ॥ (२२५) **शरीरे**[8] इति द्वितीया द्विवचनम् । **शरीरं** इति वा पाठः । **प्रधानतः** प्रधानानाम् । सार्वविभक्तिकस्तसिः ॥ (२२७) **अप्रसन्नतां** छन्नताम् । **प्रभावः** शक्तिविशेषः ॥ (२२८) **निर्वेदः** वैराग्यं अलंबुद्धिः । **संन्यासः** सर्वत्यागः ॥ (२३३) **अष्टादश** इति प्रधानपर्वाभिप्रायेण नोपपर्वापेक्षया । तेषां संग्रहः ।

आदिसभाविपिनानि विराट-
प्रोद्यमभीष्मगुरूणि च कर्णः ।

१ Ed शौण्डीर्यात्. २ After this B C ins दीर्घत्वं छन्दोविरोधात्. b ins दीर्घत्वं छन्दोभङ्गविरोधात्. ३ Ed शस्तः. ४ Ed यशोभृता. ५ b प्राक्तनं (?). ६ Ed [१९१] तान्क्षत्रियान् शूरान्. ७ b भ्रान्तिः. ८ Ed शरीरं.

शल्यकसौप्तिकपर्व तथा स्त्री-
शान्त्यनुशास्तितुरंगममेधाः ।
आश्रममौसलयानिकनाकाः
पर्वणि पर्वणि नामविशेषाः ॥
एकोनविंशतिकपर्वभिरादिपर्व
ख्यातं सभा नवभिरष्टभिरष्टयुक्तैः ।
आरण्यकं ननु विराटकथा चतुर्भि-
रेकाधिकैर्दशभिरुद्यममामनन्ति ॥
भीष्मं तु पञ्चभिरथो गुरुरष्टसंख्यै-
रेकेन कर्णमथ शल्यकथा चतुर्भिः ।
सौप्तं त्रिभिस्तदनु पञ्चभिरङ्गनानां
शान्तिश्चतुर्भिरनुशासनमेककेन ॥
द्वाभ्यामुशन्ति हयमेधमथाश्रमाख्य-
मौहुस्त्रिभिर्मुसलपर्व तथैककेन ।
एकैकशो गमननाकगती द्वयाभ्यां
वंशो हरेरिति कृता शतपर्वसंख्या ॥

आदिपर्वण्यध्यायाः २१८[1]। श्लोकाः ८९८१[2]॥ सभापर्वण्यध्यायाः ७२ । श्लोकाः २५११[2] ॥ आरण्यपर्वण्यध्यायाः २६९[2]। श्लोकाः ११६६४[2]॥ विराटपर्वण्यध्यायाः ६७[3]। श्लोकाः २०५० ॥ उद्योगपर्वण्यध्यायाः १८६ । श्लोकाः ६६९८[4] ॥ भीष्मपर्वण्यध्यायाः ११७ । श्लोकाः ५८८४[5] ॥ द्रोणपर्वण्यध्यायाः १७०[2] । श्लोकाः ९७०४[6] ॥ कर्णपर्वण्यध्यायाः ६९ । श्लोकाः ४६६४[7] ॥ शल्यपर्वण्यध्यायाः ५९ । श्लोकाः ३२२० ॥ सौप्तिकपर्वण्यध्यायाः १८ । श्लोकाः ८७०[8] ॥ स्त्रीपर्वण्यध्यायाः २७ । श्लोकाः ७७५ ॥ शान्तिपर्वण्यध्यायाः ३३९[2] । श्लोकाः १४५१५[9] ॥ अनुशासनपर्वण्यध्यायाः ४२[2] ।

१ C आदिपर्वण्यध्यायाः २२७. २ C om these numbers. ३ b ६३. ४ C ६६२४. ५ C ५८८६. ६ C ९९१०. ७ C ४९१६. ८ C ८१०. ९ b २४५२५. C om this number.



श्लोकाः १५०६[1] ॥ अश्वमेधपर्वण्यध्यायाः[2] १०७ । श्लोकाः ३३२० ॥ आश्रमवासपर्वण्यध्यायाः[3] ४२[4] । श्लोकाः १५०६[4] ॥ मुशलपर्वण्यध्यायाः[5] ८[4] । श्लोकाः ३००[4] ॥ महाप्रस्थानपर्वण्यध्यायाः[6] ३ । श्लोकाः ३२०[7] ॥ स्वर्गारोहणपर्वण्यध्यायाः[8] ५[4] । श्लोकाः २०० ॥ हरिवंशे अध्यायाः २५४[9] । श्लोकाः ४३८४[10] ॥ माथुरस्यैषा[11] व्यवस्था । पारिजातहरिवंशस्याध्यायाः २५५ । श्लोकाः १२६६४ ॥ अतः परं भविष्यपौष्करादिप्रादुर्भावे अध्यायाः श्लोकाः ३४८ । तेन पारिजातहरिवंशे श्लोकाः द्वासप्तत्यधिकषोडशसहस्राख्याः १६०७२ । एवं माथुरहरिवंशेन सह पर्वाध्यायाः २३६२ श्लोकाः ९५५ । पारिजातग्रंथसंख्यया पञ्चपञ्चाशत्श्लोकाधिकपञ्चशतोत्तरसहस्रद्वयोत्तरं एकलक्षं १०२५५५ । इत्थं शतसहस्रेऽधिकग्रन्थो न दोषाय सप्रपञ्चतया प्रादुर्भावानां वर्णितत्वादिति ॥

(२३५) भारतज्ञानस्य साङ्गवेदचतुष्टयज्ञानादाधिकत्वं प्रतिपादयति **यो विद्याद्** इति । **अङ्गानि** शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषं छन्दश्चेति । **उपनिषद्** बृहदारण्यकादि । **साङ्गोपनिषदः** इति वा पाठः । **साङ्गोपनिषदा** इति पाठे तु भिदाशब्दवद् उपनिषदाशब्दो बोद्धव्यः ॥ (२३६) शब्दगतैर्माधुर्यादिभिरर्थगतैः[12] सहृदयहृदयचमत्कारकारित्वादिभिर्गुणैरयमन्यानधरीकरोति इत्याह **श्रुत्वा त्विदं** इति ॥ (२३७) प्रज्ञाहेतुत्वादप्ययमन्येभ्यः श्रेयानित्याह **इतिहासोत्तमाद्** इति । लोकाः संविधीयन्ते स्थाप्यन्ते येषु इति **लोकसंविधयः** भूर्भुवःस्वर्लक्षणा वास्तुविशेषाः ॥ (२३८) एतत्प्रतिपाद्ये एवार्थे पुराणानां प्रवृत्तिरित्याह **अस्याख्यानस्य** इति । **चतुर्विधाः** जरायुजाण्डजस्वेदजोद्भिजाः॥ (२३९) **क्रियाः** नित्यनैमित्तिकादयः । **गुणाः** शब्दे श्लेषादयः अर्थे प्रतिपाद्ये[13] जीवात्मनि क्षमादयः परमात्मन्यानन्दादयः ॥ (२४०) सर्वकथामूलमिदमाख्यानमित्याह । **अनाश्रित्य** इति ॥ (२४१) **उपजीवनं**[14] तत्सदृशसंदर्भनिर्माणम् ।

१ C ८६७. b १५२६. २ b om from अश्वमेध° up to मुसल°. C अश्वमेधे अध्यायाः. ३ C आश्रमवासिके अध्यायाः. ४ C om these numbers. ५ C मौसले पर्वणि अध्यायाः. ६ C महाप्रस्थानिके अध्यायाः. ७ b श्लोकाः १०४८४. ८ b om from स्वर्गारोहण° up to प्रादुर्भावानां वर्णितत्वात्. ९ C १५४. १० C ३८४. ११ B om from माथुरस्यैषा up to वर्णितत्वात्. १२ C माधुर्यादिभिरनुगतैः. १३ C आत्मप्रतिपाद्ये ( for अर्थे प्रतिपाद्ये ). १४ Ed उपजीव्यते.

तदर्थस्य तदर्थसमस्य चार्थस्योत्प्रेक्षणम् ॥ (१८७) **विशेषणे** अतिशयकरणे ॥ (२४२) **अप्रमेयं** अर्थतो ग्रन्थतश्च । **पुण्यं** काम्यपुण्यहेतुत्वात्[1] । **पवित्रं** नित्यनैमित्तिकपुण्यहेतुत्वात् । **पापहरं** ब्रह्महत्यादिप्रायश्चित्तत्वात् । **शिवं** मङ्गलत्वात् । **समधिगच्छति** शब्दतोऽर्थतश्च प्रतिपद्यते । **पुष्करजलाभिषेकस्य** पुण्यहेतुत्वेन प्रसिद्धत्वाद् उपमानत्वम् । तेनापि **किं** इत्यनेन पुण्यार्थिनो भारतश्रवणे एव प्रवृत्तिर्युक्तेति दर्शयति ॥ (२४३) **अनुत्तमं** न विद्यते उत्तमं यस्मात् । **महार्थं** महान् धर्मार्थकाममोक्षलक्षणोऽर्थो यस्य । **द्विन्यार्य्यं**[2] शब्दोऽर्थश्च द्वयं न्याय्यं न्यायादनपेतं यस्य । अर्थं वा द्विः । द्वयं सामस्त्ये च एकदेशेन चाध्ययनं न्याय्यम्[3] । अथ वा द्विः द्विधा मानुषे दैवे च कर्मणि न्याय्यम् । **द्वित्याज्यं** इति वा पाठः । द्वे गर्वाश्रद्धे त्याज्ये यस्मिंस्तद् **द्वित्याज्यम्** । अहं भारतं बुध्ये इति गर्वः जैमिनिप्रभृतीनामपि संशयदर्शनात् । अन्यथापि ब्रूयात् स्वकृतिमाहात्म्यख्यापनायेत्यश्रद्धा ॥

॥ आदिपर्वणि पर्वसंग्रहः ॥

## [ ३ ]

(१) **दीर्घसत्रं** सहस्रवार्षिकम् । **उपास्ते स्म** उपासितवान् ॥ (२) **सारमेयः** श्वा । **रोरूयमाणः** अत्यर्थं रुवन् ॥ (६) **नावेक्षे** अवेक्षणालक्षणमपराधं न करोमि । यदाहुः ।

कुक्कुटः पक्षवातेन श्वा दृष्टयान्नं प्रदूषयेत् ॥

(७) **सरमा** देवशुनी ॥ (८) **अदृष्टं** अचिन्तितम् ॥ (९) **संभ्रान्तः** भीतः । **विषण्णः** मोहविकारैर्व्याप्तः । एतेन एवमुक्तमकृतापराधस्य हिंसा तीव्रवेगित्वादिहैव फलतीति ॥ (१०) पापेन कृत्यां पापमेव वा कृत्या **पापकृत्या**[4] ॥ (१५) **उपांशु** अन्येनाश्रूयमाणम् ॥ (१७) **उपावृत्तः** प्रत्यागतः ॥ (१८) **तक्षशिला** देशविशेषः । (१९) अपोदस्यापत्यं **आपोदः**[5] । **अयोदः** इति वा पाठः । अयोमया दन्ता अस्येति ॥ (२०) **खण्डः** एकदेशः ॥ (३०) **सर्वाणि शास्त्राणि** इत्यनेन ग्रन्थेन गुरुभक्तेस्तीव्राया हस्तगतमेव तीव्रफलमिति ॥

१ C काम्यपुण्यफलत्वात्. २ Ed विन्यस्तं (for द्विन्याय्यं). ३ C om from अथ वा up to चाध्ययनं न्याय्यम्. ४ C om from कृत्या up to पापकृत्या. ५ Ed अयोदः.



(३५) **पीवान्** स्थूलः ॥ (४९) **वृत्त्युपरोधः** वृत्तिप्रतिबन्धः ॥ (५८) **आश्विनौ स्तुहि** इति अत्रेदं विचार्यते । अश्विनाविति स्वर्वैद्यौ सूर्याचन्द्रमसौ वा विवक्षितौ । स्वर्वैद्यौ इति पूर्वपक्षः अश्विशब्दस्य तत्पर्यायाणां च नासत्यदस्रादीनां स्वर्वैद्ये रूढत्वात् । सूर्याचन्द्रमसोश्च यौगिकत्वाद् योगाद्रूढेर्बलीयस्त्वात् प्रकृतत्वाच्च । विरुद्धभोजनेन हि नष्टचक्षुषश्चक्षुःकामस्य तत्प्रतिक्रियासमर्थत्वात् स्वर्वैद्यौ प्रकृतौ न सूर्याचन्द्रमसौ । सिद्धान्तस्तु सूर्याचन्द्रमसावन्यत्रासंभविनः संवत्सरर्तुमासदिनादिनिर्माणस्य लिङ्गस्य स्वर्वैद्ययोर्योजयितुमशक्यत्वात् । लिङ्गबलेन च रूढिताः प्रत्यायन्ते शब्दाः 'आकाशस्तल्लिङ्गात्'* इत्यधिकरणन्यायेन । तत्र ह्याकाशशब्दस्य भूताकाशे रूढत्वात्तदेवाकाशशब्दवाच्यमिति पूर्वपक्षं कृत्वा तल्लिङ्गाज्जगत्सृष्टत्वादेः परमात्मैवाकाशशब्दवाच्य इति सिद्धान्तः कृतः । प्रकृतत्वं च सूर्याचन्द्रमसोरपि संभवति । 'आरोग्यं भास्करादिच्छेत्' इति प्रसिद्धेः । ओषधिसाध्ये च कार्ये ओषधीशस्य चन्द्रस्य स्तुतिर्नाप्रकृता ॥ (५९) **देवावश्विनौ वाग्भिर्ऋग्भिः** ॥

**[ ६० ] प्र पूर्वगौ पूर्वजौ चित्रभानू**
**गिरा वा शंसामि तपसा ह्यनन्तौ[1] ।**
**दिव्यौ सुपर्णौ विरजो विमाना-**
**वधिक्षिपन्तौ[2] भुवनानि विश्वा ॥**

**आश्विनौ** अश्वाः किरणाः अनयोः सन्तीति । **आशंसामि** स्तौमि गुणवत्तया ब्रवीमीति संबन्धः । **वाग्भिः** वाक्यैः । **ऋग्भिः** ऋग्रूपाभिः ऋचां गुणप्रकाशकत्वात् । मन्त्रत्वे शक्त्यतिशयेन देवतावर्जने समर्थत्वाच्च । **प्र पूर्वगौ** प्र शब्दो अयं आशंसामि इत्यत्र योजनीयः तेन प्राशंसामि । पूर्वं दिनरजन्योरारम्भकालः तं गच्छतः इति तत्र गमयन्तौ विश्वमिति वा । गमिरयं ज्ञानार्थः । प्र इति तस्यैव विशेषणं वा प्रकृष्टं गमयतः साक्षात्कारकारित्वात् । **पूर्वजौ** जगत्सृष्टौ प्रथमोत्पन्नौ । यदाह 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्'† इति । **चित्रभानू** चित्रा विचित्रा भानवः सूर्यस्य । तं एवं हि तपन्ति वर्षन्ति शिशिरमुत्सृजन्ति च ।

१ Ed तपनाश्चनन्तौ. २ Ed °वाधिक्षियन्तौ.

* Br. Sūtra, I. 1. 22. † Ṛv. X. 190. 3.

चन्द्रस्य तु चित्रा आश्चर्या मनोहारिणः । **गिरौ** पर्वते पूर्वगौ इत्यन्वयः । गिरावेव हि तयोः प्रथमदर्शनस्थानम् । तेन कालापेक्षया दिनरजन्योरारम्भो देशापेक्षया गिरिः प्रथमोपलब्धिस्थानम् । मण्डलस्य परिच्छिन्नत्वेऽपि **तपसा** तेजसा । **हि** यस्मात् । **अनन्तौ** अपरिच्छिन्नौ । अथवा **तपसा** प्रसिद्धेन चान्द्रायणादिना । अन्तो मरणं न विद्यते ययोः । **दिव्यौ** दिवि भवौ । **सुपर्णौ** सुगती सुपक्षौ वा । पक्षाविव पक्षौ दक्षिणोदीच्यौ दिशौ ।

गतौ तथा सहायेषु पतत्र्यङ्गरुहेषु च ।
पल्लवेषु तरूणां च पर्णशब्दः प्रकीर्तितः ॥

**विरजौ** विगतरजोगुणौ सात्त्विकत्वात् । विरजसौ इति प्राप्ते सलोपश्छान्दसः । **विमानौ** विमानस्थौ विमानशब्दस्य तत्रस्थे उपचारात् । अथवा विगतं मानं परिमाणं मानोऽहंकारो वा विगतो ययोः । **अधि** उपरि भूत्वा **क्षिपन्तौ** प्रेरयन्तौ । **भुवनानि विश्वा** विश्वानि । निलोपश्छान्दसः ॥

**[ ६१ ] हिरण्मयो शकुनी सांपरायौ**
**नासत्यदस्रौ सुनसौ जयन्तौ[1] ।**
**शुक्रं वयन्तौ तरसा सुवेमा-**
**वधिन्ययन्तावसितं[2] विवस्वत् ॥**

**हिरण्मयौ** तेजोमयौ । तथा च हिरण्मयेन पात्रेण इति तेजोमयेनेत्यर्थः । **हिरण्ययौ** इति वा पाठः । हिरण्ययौ कामगमौ । **शकुनी** इव शकुनी खेचरत्वात् । **सांपरायौ** संपरायः परलोकः तस्मै हितौ । **नासत्यदस्रौ न** विद्यते असत्यं ययोः । **दस्रौ** दर्शनीयौ । **सुनसौ** शोभननासायोगिनौ । मण्डलाधिष्ठातृपुरुषस्य नासिकाद्यवयवयोगात् । **जयन्तौ** तमोभङ्गकर्तृकत्वात् । **शुक्रं** शुक्लं दिवसं ज्योत्स्नायोगि नक्तं च । **वयन्तौ** कुर्वन्तौ । **तरसा** शीघ्रम् । **सुवेमौ** कुविन्दाविव । **अधिन्ययन्तौ** अधिक्षिपन्तौ । **आसितं** तमः । **विवस्वत्** विवस्वन्तौ प्रकाशन्तौ ॥

**[ ६२ ] ग्रस्तां सुपर्णस्य बलेन वर्तिका-**
**ममुञ्चतामश्विनौ सौभगाय ।**

1 Ed वैजयन्तौ. 2 Ed °वभिन्ययन्ता°.



**तावत्सुवृत्तावनमं तमायर्या[1]**
**सत्तमा गा अरुणा उदावहम्[2] ॥**

**ग्रस्तां** गिलिताम् । शोभनीयानि दर्शनीयानि पर्णानि पत्राणि यस्य अर्क-वृक्षस्य असौ **सुपर्णः** । तस्य **बलेन** शक्त्यतिशयेन । वार्तिकामिव **वर्तिकां** नयन-रश्मिधाराम् । **सुपर्णस्य** गरुडस्य **वर्तिकां** इति पक्षविशेषम् । अनयोरुपमानोपमेय-भावोऽर्थादवगन्तव्यः । **अमुञ्चतं** दत्तं युवामिति प्रार्थनायामेव । विभक्तिपुरुषयोर्व्य-त्ययात् अमुञ्चताम् इत्याह । हे **आश्विनौ** । **सौभगाय** सुभगभावाय । अन्धो ह्यसुभगः । **तावत् अनमं** नमस्कृतवानास्मि इत्यन्वयः । **सुवृत्तौ** शोभनाचारौ सुवर्तुलौ वा । **तमायया[3]** साकाङ्क्षया बुद्ध्या । तमु काङ्क्षायां अय गतौ च । ताम्यति अयते येन **तमाया** । **सत्तमाः** शोभनतमाः । **गाः** दृष्टीः । **अरुणाः** लोहिताः । अरुणत्वं दृष्टेर्गुणविशेषः । **उदावहम्** उदावहामि प्राप्नोमि यावत् इति बोद्धव्यं तावद्यावतोर्नित्यसंबन्धात् ॥

**[ ६३ ] षष्टिश्च गावास्त्रिशताश्च धेनव**
**एकं वत्सं सुवते दुहन्ति ।**
**नानागोष्ठा विहिता एकदोहना-**
**स्तावाश्विनौ दुहतो घर्म्यमुक्थ्यम्[4] ॥**

**गावः** तिथयः तासां विशेषणं **धेनवः** दोग्ध्र्यः । **चकारावन्योन्यं** समु-च्चिनुतः । षष्ठ्यधिका त्रिशती । **एकं वत्सं** संवत्सरलक्षणम् । **सुवते** उत्पाद-यन्ति । **तं एव दुहन्ति** पूरयन्ति । **नाना** विचित्राणि **गोष्ठानि** गोस्थानकानि पक्षमासर्तुलक्षणानि यासाम् । **विहिता** कृताः **एकः** अर्कः **दोहनः** दोग्धा यासां ताः पूर्वोक्ताः गाः । **तावाश्विनौ दुहतः** इत्यन्वयः । **घर्म्यं** घर्मो धर्मः तस्मै हितं । **उक्थ्यं[6]** प्रशस्यम् ॥

**[ ६४ ] एकां नाभिं सप्तशता अराः श्रिताः**
**प्रधिष्वन्या विंशतिरर्पिता अराः ।**

1 Ed °वनमन्त मायया. 2 Ed उदावहन्. 3 C तमायया तमु आकांक्षायां......नया हेतुभूतया......दृष्टिप्राप्तिः तां दर्शयति ( corrupt). 4 Ed घर्ममुक्थ्यम्. 5 After this, C ins चन्द्रस्यापि सूर्ये प्रवेशान्न पृथग्दोहकथनम्. 6 C उक्थ्यं उक्तिः प्रशस्तिः तस्यै हितं उक्थ्यामिति वा उक्थ्यो वेदभागः तस्मै हितम्.

**अनेमि[1] चक्रं परिवर्ततेऽजरं**
**मायाश्विनौ समनक्ति चर्षणी ॥**

**ऐकां**[2] प्रधानभूतां **नाभिं** ऋतुषट्करूपां **श्रिताः सप्तशतानि अराः** अहानि रात्र्यश्च । **प्रधिषु** अन्तेषु **अन्याः अराः** अहानि रात्र्यो दश एवं **विंशतिः अर्पिताः** स्थापिताः । अ वासुदेवो नेमिः यस्य **अनेमिः** । पर्वतचक्रं **परिवर्तते** गत्वा गत्वा निवर्तते । **अजरं** अविनाशि इत्यर्थः । **माया** प्रज्ञा सर्वज्ञानम् । हे **अश्विनौ** युवां माया **समनक्ति** व्यनक्ति । मायाया विशेषणं **चर्षणी** प्रसिद्धेति यावत् । तस्मात्परमेश्वरप्रज्ञया व्यङ्गिनौ युवां किं कर्तुमसमर्थौ ॥

**[ ६५ ] एकं चक्रं वर्तते द्वादशारं प्रधि-**
**पण्णाभिमेकाक्षममृतस्य धारणम्[3] ।**
**यस्मिन्देवा अधि विश्वे विषक्ता-**
**स्तौ माश्विनौ मुञ्चतं[4] मा विषीदतम् ॥**

**एकं चक्रं** संवत्सरलक्षणं **वर्तते** व्यवहारभावेन प्रवर्तते । **द्वादश**मासा **अरा** यस्मिन् । प्रधौ नेमेः प्रान्ते प्रान्ते सीदन्तीति **प्रधिपन्** अयनद्वयम् । तत्र ह्युत्तरायणे रात्रिः सीदति दक्षिणायने दिनम् । **प्रधिपन्** एव **नाभिः** यस्य । **प्रधिषण्णाभिं** इति पाठः । **प्रधिः** चक्रोदरात् बहिः **षड्** ऋतवो **नाभिर्यस्य** । **एकः** अद्वितीयः ईश्वरः **अक्षो** यस्य । **अमृतस्य** मोक्षस्य **धारणं** स्थानं ध्रियतेऽस्मिन्निति । **यस्मिन् अधि** उपरि **विश्वे देवा विषक्ता** विशेषेण श्रिताः । **तौ** तादृशौ **मा मुञ्चतम्** । **मा**[5]शब्दो निषेधे । मा त्यजतामित्यर्थः । कर्मापेक्षया[6] चक्र-

---

१ C सुनेमि. २ C ins the following passage here :—
**एकां नाभिं** संवत्सररूपाम् । मध्यस्थत्वाद् **नाभिः** । तस्यां नाभौ **सप्तशता विंशतिः** च **अराः** कण्टकाः द्विजाः । अहोरात्रे विभज्य विंशत्यधिकसप्तशतसंख्या पूर्णाया । **सुनेमि** शोभनं नेमिः नमनाद्भवति । तथा **चक्रं** कालचक्रं परिभ्रमणशीलम् । **मायाश्विनौ** चन्द्रादित्यौ क्रमेण......**समनक्ति चर्षणी** (सु ?) । सम· (क्तं) अनवरतं भ्रमति ऋतुमासादिक्रमेण । **अजरं** जराशून्यं अविनाशीत्यर्थः । **माया** जगत्कारणं कपटम् । हे **आश्विनौ** युवयोः **माया** तच्चक्रं **समनक्ति** । मायायाः विशेषणं **चर्षणी** । चर्षः प्रसिद्धः तद्युक्ता प्रसिद्धा इत्यर्थः । तस्मात्परमेश्वरप्रज्ञाया व्यञ्जनौ युवां किं न कर्तुं समर्थौ ।
३ Ed °षण्णाभिं. ४ Ed °स्तावश्विनौ मुञ्चतो. ५ B मा निषेधि मुञ्चतः त्यजतः. ६ C ins the following passage here :—
कर्मापेक्षायां पूर्वोक्तकालचक्रं संबध्यते । कालचक्रं त्यजतमित्यर्थः । हे **आश्विनौ** यतः एवंभूतौ युवां ततः **मा विषीदतं** इति मा विषादयतं णिचो लोपाद् विषीदतम् । एवं महिमानौ युवां दृष्ट्यपेक्षया अहं प्रार्थये इति प्रार्थना **मुञ्चत** इति ।



मित्यादिना[1] उक्तं कालचक्रमिति संबध्यते । तदिदमेतादृशं कालचक्रं आश्विनौ मा त्यजतः किं तु धारयतः इति तयोर्महिमातिशयः कथितो भवति । **मा विषीदतं** इति णिचो लोपात् मा विषादयतमिति लभ्यते । एवं महिमानौ युवां उपेक्षया मा विषादयतमिति प्रार्थना ॥

**[ ६६ ] आश्विनाविन्द्रममृतं वृत्तभूयौ**
**तिरोधत्तामश्विनौ दासपत्नी ।**
**हित्वा गिरिमश्विनौ गामुदाचरन्तौ**
**तद्वृष्टमह्ना प्रथिता बलस्य[2] ॥**

**आश्विनौ** सूर्याचन्द्रमसौ । **इन्द्रममृतं[3] च तिरोधत्तां** तिरोहितवन्तौ । तत्र हेतुः **वृत्तभूयौ** इति[4] । **वृत्तानि** चरितानि **भूयांसि** ययोः । वृत्तभूयांसाविति प्राप्ते सलोपच्छान्दसः । वृत्तानि जगद्विरोधितमोनिवारणं तेजःप्रसारणं व्यवहारप्रवर्तनमित्यादीनि[5] । तत्र इह तिरस्कारार्थं[6] च सुप्तजनप्रबोधनमित्यादि सूर्यस्य । चन्द्रस्य ज्योत्स्नया जगत्संतापोपशमनं चराचराण्यायनमिति । तत्रैवं[7] हेत्वन्तरमाह **अश्विनौ दासपत्नी** इति । दासानिव दासान् भक्तान् पालयन्तौ । अत्र लिङ्गव्यत्ययाद्वचनव्यत्ययाच्च स्त्रीलिङ्गमेकवचनत्वं च पालयन्तावित्यस्य पत्नी इत्यादेश इति यावत् । अश्विनोः अपरं महिमानमाह **हित्वा गिरिं** इति[8] । उदयगिरिं त्यक्त्वा । **गां** भुवम् । **उदाचरन्तौ** उच्चैः परिभ्रमन्तौ । एकेनं[9] **अह्ना** दिवसेन । **तद्वृष्टं** सर्वे प्राणिभिः । अश्विनोः **बलस्य** सामर्थ्यस्य । प्रथनं प्रथः प्रथोऽस्यास्तीति प्रथी तस्य भावः **प्रथितां**[10] सामर्थ्यस्य प्रकाश इति यावत् ॥

---

१ Ed मित्वा. २ Ed बलस्य. ३ C इन्द्रं शक्तिं अमृतं च देवार्थं तिरोधत्त आच्छादितवन्तौ. ४ C has अत्र हेतुः यौ वृत्तभूयौ वृत्तानि भूयांसि ययोः तौ तथा च्छान्दसः सलोपः. ५ After this C ins दृष्टिप्रसादनं स्वात्मनकपूजनं इत्यादीनि. ६ C has तिरस्काराय सूर्यस्य । चन्द्रस्यामृतमयत्वाज्जगत्संतापशमनं चराचराण्यायनमिति । तेनाश्विनौ इन्द्रकर्म अमृतकर्म च कुरुतः अतः कर्मद्वारेण तौ कीर्तयाति. ७ C om. तत्रैव हेत्वन्तरमाह. ८ C ins the following passage here :—
अश्विनौ दासपत्नी । दास इव दासा भक्ताः तान्पत्नी पालयन्तौ तत्पालकावित्यर्थः । लिङ्गव्यत्ययेन वचनयत्येन च स्त्रीलिङ्गत्वं एकवचनत्वं च पालकौ इत्यस्य स्थाने पत्नीशब्दात्. ९ B om from एकेन अह्ना up to बलस्य सामर्थ्यस्य. १० After प्रथिता C ins the following passage :—
अश्विनोः इत्यथालभ्यते अश्विनोर्बलस्य । प्रथिता प्रकाशः सर्वैरेव दृष्टेत्यन्वयः । उपरिदृष्टमित्यर्थाद् भिद्यते दृष्टेति । अश्विनौ इति स्थाने त्रयेपि पृथक्पृथक्त्वप्रतिपादकत्वादुच्चारणम् । यस्मादश्विनौ इन्द्रामृतकर्मं कुरुतः भक्तांश्च पालयतः भुवं च गतौ तस्मान्ममाभिलषितं कुरुतामित्यन्वयः ।

[ ६७ ] युवां दिशो जनयथो दशाग्रे
समानं मूर्ध्नि रथयानं[1] वियान्ति ।
तासां यानमृषयोऽनुप्रयान्ति
देवा मनुष्याः क्षितिमाचरन्ति ॥

**युवां**[3] अश्विनौ **दश दिशो जनयथः** प्रादुर्भावयथः । दिशो[4] विशेषणं **दश** । **अग्रे** प्रथमतः । **समानं** सह यथा भवति । **मूर्ध्नि** उपरि । **रथयानं** रथसमूहः । **वियान्ति**[5] विशेषेण गच्छन्ति । **तासां** पूर्वोक्तानां दिशां **यानं**[6] यायते इति यानो मार्गः । **ऋषयोऽनु** अनन्तरं **प्रयान्ति** । **देवा मनुष्या क्षितिमाचरन्ति** ॥

[ ६८ ] युवां[7] वर्णान्विकुरुथो विश्वरूपान्
तेष्विध्यन्ते[8] भुवनानि विश्वा ।
ते भानवोऽत्यन्तभूताश्चरन्ति[9]
देवा मनुष्याः क्षितिमाचरन्ति ॥

**युवां** चन्द्रादित्यौ यान् **वर्णान्** रश्मीन् **विकुरुथो** विविधप्रकारेण कुरुथः । अभिव्यञ्जयथ धातुक्रमेण **विश्वरूपान्** जगतः प्रकाशकान् । **तेषु भुवनानि विश्वानि इध्यन्ते** गच्छन्ति । सर्वं जगद्भवत्तेजः एव गच्छतीत्यर्थः । **विश्वा** निलोपश्छान्दसः । इधि गतौ इत्यस्य धातोः **इध्यन्त** इति रूपम् । **ते** युवयोः **भानवो** । **अत्यन्तभूता** अभ्यन्तरप्रसारिताः । **चरन्ति** अधस्तिर्यग्गच्छन्ति । **ये देवा मनुष्याः** च **क्षितिं** क्षयं कर्मसमाप्तिं **आचरन्ति** इत्यर्थः । एतेन युवां प्रार्थिनां कर्मप्रवृत्तिर्नास्तीत्यन्वयः ॥

[ ६९ ] तौ नासत्यावश्विनौ वां महे वां[10]
स्रजं च यां बिभृथः पुष्करस्य ।
तौ नासत्यावमृतावृतावृधा-
वृते देवास्तत्प्रपदेन सूते ॥

१ Ed रथया ( for रथयानं ). २ Ed यातं (for यानं). ३ B युवां दिशो जनयथः प्रादुर्भावनम् । ४ C om दिशो विशेषणं दश. ५ B वियाति विशेषणं याति. ६ After यानं, C ins मार्गमृषयः वालखिल्यादयः अनु अनन्तरं प्रयान्ति । देवा मनुष्याश्च क्षितिं स्वकीयभूमिं आचरान्ति. ७ B om the Rk 'युवां वर्णान्' etc. and the commentary on it. ८ Ed तेऽधिक्षियन्ति ( for तेष्विध्यन्ते ). ९ Ed ०वोऽप्यनुस्रुता० ( for ०वोऽत्यन्तभूता० ). १० Ed ०वाश्विनावामहे वा ( for ०वश्विनौ वां महे वा ).



**तौ** पूर्वोक्तौ **नासत्यौ न** विद्यतेऽसत्यं ययोः । **अश्विनौ** इति संबोधनम् । **वां** युवाम् । **वा महे** पूजयामि । **स्रजं** मालाम्[1] । **यां च बिभृथो** धारयथः । **पुष्करस्य** पद्मस्य । तां च **महे** इत्यर्थः । **तौ नासत्यौ**[2] असत्यशून्यौ । **अमृतौ** मृतिशून्यौ[3] । नासत्याविल्यनेनासत्याभावः प्रतिपादित इति न पुनरुक्तम् । **ऋधौ** ऋद्धियुक्तौ । **ऋते**[4] सत्ये मार्गे । **देवास्तत्प्रपदेन** तच्च तत्प्रपदं चेति प्रकृष्टो मार्ग इत्यर्थः । **सूते** 'व'व्यत्ययात् सुवते ॥

[ ७० ] मुखेन गर्भं लभेथां[5] युवानौ
गतासुरेतत्प्रपदेन सूते ।
सद्योजातो[6] मातरमत्ति गर्भ[7]-
स्तावश्विनौ मुञ्चथो जीवसे गाः ॥

**मुखेन**[8] मुखस्थनासिकाभ्याम् । **गर्भं** गर्भस्थमपत्यम् । **लभेथां युवानौ**[9] नातिबालाविति गर्भान्तराद्रुत्कर्षः । **गतायुः** मरणधर्मा । **एतत्प्रपदेनं**[10] एवं मार्गेण **सूते** । पुनर्वैलक्षण्यमाह । **सद्योजातः गर्भः मातरमत्ति** धयति । एतेन गर्भो न धारयत इति विशेषः । यद्यपि अश्विनीकुमारावेकस्य सूर्यस्य पुत्रौ तथापि इह उभयपुत्रतया व्यपदिश्येते मित्रपुत्रस्यापि पुत्रत्वात् । **तौ** यथोक्तरूपौ **अश्विनौ** सूर्याचन्द्रमसौ । **गाः** दृष्टीः[11] । **मुञ्चथः** दत्तम्[12] । प्रार्थनायां विभक्तिव्यत्ययात् तेन मुञ्चतमिति बोद्धव्यम् । **जीवसे** जीवनाय । यथा सर्वमर्यादामिदं बुभुक्षामन्यच्च दुःसहपरिभवशतं सोढ्वाऽक्षतगुरुभक्तेरुपमन्योरेवंविधं फलं प्रसूत-

१ After this B ins वां समुच्चयो ( ये ? ) यां बिभ्रय धारय ( corrupt ). २ C नासत्यनामानौ. ३ After मृतिशून्यौ C ins पूर्वं नाम्नो निरुक्त्या नासत्यार्थप्रतिपादनम् । इदानीं कर्मणा इति ( न ) पुनरुक्तम् । ......धावोधाद्वियुक्तौ ( ? ) ययोः तत्प्रपदेन मार्गेण देवाः सूते......क्षीय गतं गृह्णन्तीत्यर्थे वचनव्यत्ययादेकत्वं बहुत्वे । ४ B सूते ( corrupt for ऋते after ऋद्धियुक्तौ ). ५ Ed लभतां (for लभेथां). ६ B सत्यो. ७ B गर्भ. ८ B मुखेन मुखस्तु (?) नासिकापुटाभ्याम्. ९ After युवानौ C ins किंभूतौ युवानौ । अनेन गर्भान्तरादुत्कर्षः । सूर्य एव चन्द्रमाः वडवाया गर्भमाधत्त ( तस्मा ) च्चुकं नासिकायां निरवसत् । तत्राश्विनौ जातौ. १० After एतत्प्रपदेन C ins एवं मार्गेण योनिनिर्गमलक्षणेन सूते भवन्तौ तथा वृत्तो ( न ... ) अतः पुनर्वैलक्षण्यमाह । सत्यो ( द्यो ) जातं गतं ( र्भे ) मातरं धत्ति धयति तस्यां स्तनपानं करोति । युवयोः पुनर्गर्भः तथाभूतो न भवति । गर्भमिति । लिङ्गव्यत्ययान्नपुंसकत्वम् । ११ B om गाः दृष्टीः. १२ B मुञ्चथोदस्यः ( corrupt ). After मुञ्चथः दत्तम् C ins अर्थान्मन्युमित्यर्थः ( अर्थादुपमन्युमित्यर्थः ? ) । मुञ्चथ इति व्यत्ययान्मुञ्चतमिति । किमर्थम् । जीवसे जीवनाय । अर्थो हि क्वचिद्गमनात्युपरोधादङ्गहीनत्वा ( दि ) निन्दितत्वाच्च जीवरहितो भवति । जीवन ( से ? ) इति छान्दसः ।

व्रती वैदिकी श्रुतिः एवमन्यस्यापि भक्त्यातिशयशालिनः एव वेदः फलवान्। अन्यस्य तु काव्यनाटकादीन्पठतो निष्फलः इत्युपमन्युपरीक्षातात्पर्यार्थः। तथा वेदपरीक्षातात्पर्यार्थः। अनर्हेऽपि कर्मणि प्रेर्यमाणेन शीतोष्णद्वन्द्वैर्बाध्यमानेनापि तथा पारुष्यं प्रभुञ्जानस्य[1] गुरोरप्रतिकूलाचरणेन दीर्घकालपर्युपासनं मन्त्रशक्त्यतिशयमुद्बोधयति ॥

(८४) **न इयेष** नेष्टवान्। उत्तङ्कपरीक्षातात्पर्यार्थस्तु स्त्रीभिः स्वयं व्रियमाणेनापि ब्रह्मचर्यान्न स्खलितव्यमिति ॥ (९४) **अधर्मेण** अध्यापनधर्मातिक्रमेण **विब्रूयात्** विशिष्टं ब्रूयात्। **प्रैति** म्रियते ॥ (१००) **पिनद्धे** आनद्धे। **पुण्यकं** व्रतविशेषः। **परिवेषणं** अन्नादिदानम् ॥ (१०१) **प्रातिष्ठत्** प्रस्थानमकरोत् ॥ (११५) **खानि** इन्द्रियाणि ॥ (११७) **भिक्षिते** याचिते ॥ (१३९) **ऐरावतो राजा** येषां ॥ (१४०) **कल्माषः** चित्रः ॥ (१४१) **अकाशिव** एव नागान् प्रति। सेनेव **सेना** तद्बोधकत्वात् ॥ (१४२) **प्रग्रहः** दाम। **धृतराष्ट्रो यदा एजति** कम्पते गच्छतीति यावत्। **यान्ति** गच्छन्ति। दामबद्धा इव गच्छन्तीत्यर्थः ॥ (१४३) **ऐरावतो ज्येष्ठो भ्राता** येषाम् ॥ (१४६) **महद्द्युम्नि** देशविशेषे ॥ (१४७) **तन्त्रे** चन्द्रसूर्यतुरीनिबद्धरात्र्यहर्लक्षणसूत्रसमुदाये। **आधिरोप्य** तन्त्रोपरि आरोप्य। भाविनं पटं बुद्ध्यारोप्येत्यर्थः। **वयन्त्यौ** तन्तून् सुनिरन्तरान्[2] कुर्वन्त्यौ ॥ (१४८) **कृष्णा**[3] रात्रयः। **सिता** दिवसाः। चक्रमिव **चक्रं** संवत्सरं परिभ्रमणकारित्वात्। कुमारा इव **कुमाराः** अल्पकालत्वात्। **परिवर्तनं**[4] गतस्यानयनम्। **पुरुषं** इन्द्रम्। **दर्शनीयं** दर्शनार्हम् ॥ (१४९) **मन्त्रवादाः** ते **श्लोकाः** चेति ॥ (१५०) षष्ठ्यधिका त्रिशती तिथीनाम्। **चरति** गच्छति। **चतुर्विंशति** पर्वाणि पक्षाः ॥ (१५१) **विश्वरूपे**[5] नानारूपे। **विवर्तयन्त्यौ** परिणामयन्त्यौ तन्तून् सुनिरन्तरान् कुर्वन्त्यौ ॥ (१५२) **भर्ता** धारयिता। **कृष्णे** वर्णतः ॥ (१५३) **अपां गर्भः** अद्भ्यो जातत्वात्। **पुराणं** सृष्ट्यादौ जातत्वात् ॥ (१६२) **आवापयन्ती**[6] शोषाय क्षिपन्ती ॥ (१८०) **शब्दानां संपद्** मधुरहितप्रियता ॥ (१८६) **अपचितिः** पूजा। इयमेव च पूजा तदपकर्तुरपकारो नाम ॥ (१८७) **पञ्चत्वं** मरणम् ॥ (१८८) **बलेन** विषसामर्थ्येन। **दर्पः** चित्तसमुन्नतिः। **उन्मत्तः**[7] उन्मार्गगः ॥ (१९५) **दुःखं** प्रतिकूलवेदनीयम्। **शोको** विपन्नस्येष्टस्य पुनः पुनर्भावनम् ॥

[1] C भ्रांत ज्ञानस्य ( for प्रभुञ्जानस्य ). [2] C उत निरन्तरा (?) कुर्वन्त्यौ. [3] C om from कृष्णा रात्रयः up to सुनिरन्तरान् कुर्वन्त्यौ. [4] Ed परिवर्त्यमानं. [5] Ed विश्वरूपं. [6] Ed आवपन्ती.



[४]

(५) **शास्त्रे** विधिशास्त्रे। **आरण्यकं** बृहदारण्यकम्। तच्च ब्रह्मशास्त्राणामुपलक्षणम् ॥

[५]

(१) **कच्चित्** प्रश्ने ॥ (३) **कल्पाः**[8] समर्थाः। अहं इत्यस्य विशेषणम् ॥ (६) **पुराणरूपे आश्रये संयुतम्** ॥ (९) **यशः** नाम देशान्तरे कालान्तरे च परबुद्धिसमारूढो गुणौघः। **नियतः** विधिप्रतिषेधाभ्याम्। **इन्द्रियं** उपस्थः तस्य नियमः स्वदारेष्वपत्यार्थप्रवृत्तिः ॥ (१४) **हृच्छयः** कामः ॥ (१६) **जिहीर्षुः** हर्तुमिच्छन् ॥ (२३) **कविः** पण्डितः ॥

[६]

(६) **सृतिः**[9] मार्गः ॥ (१२) **तेजसा** प्रभावेन ॥

[७]

(६) **योगेन** योगप्रभावेन इच्छानभिघातलक्षणेन इच्छाप्राकाम्येन। **आत्मानं** शरीरेन्द्रियम्। **मूर्तिषु** आकारेषु। **सत्रेषु** दीर्घकालचरितेषु। **क्रियासु** नित्यनैमित्तिकीषु। **मखेषु** अग्निष्टोमादिषु ॥ (८) **आपः** आपप्रभवोऽग्निः। कार्ये कारणोपचारात्। अपां स्वभावेन प्रयोजनाभावात्। एतेनाग्निः **देवगणाः सर्वे** अग्निः **पितृगणास्तथा** इत्युक्तं भवति ॥ (९) **एकीभावः** एकाग्निरूपत्वात्। **पृथक्त्वं** मूर्तिभेदात् ॥ (१२) **संहारं** अदर्शनम् ॥ (१४) **विधध्वं** कुरुध्वम् ॥

[८]

(१३) **भगदैवते** पूर्वफल्गुन्याम् ॥

[7] Ed समुत्सिक्तः ( for समुन्मत्तः ). [8] Ed कल्याः. [9] B स्मृतिः. C स्रुतिः (?).

[ ९ ]

( १६ ) **भविष्ये** भविष्यत्पुराणे ॥ ( १८ ) **व्रतं** नियमम् ॥

[ १० ]

( ३ ) **अहिगन्धेन** अहिसादृश्यात् ॥ ( ४ ) **एकोऽनर्थः** सर्पधिया निष्कारणदण्डपातादिः । **पृथगर्थो** विषप्रभृतिः । **एकं दुःखं** बिलेशयत्वं पवनाशनत्वमित्यादि । **पृथक्सुखं** पूजारक्षणहविर्भागादि ॥ ( ६ ) **कामया** स्वेच्छया ॥

[ ११ ]

( ६ ) **नर्म** हसनम् ॥ ( १२ ) **अहिंसा** देशकालजातिसमयैरनवच्छिन्नो भूतानामनभिद्रोहः । देशावच्छिन्नः तीर्थे न हनिष्यामीति । कालावच्छिन्नः पर्वणि न हनिष्यामि । जात्यवच्छिन्नो मत्स्यबन्धस्य मत्स्यादन्यं न हनिष्यामि । समयावच्छिन्नः पितृदेवकाल्पितादन्यं न हनिष्यामि । तद्व्यवच्छेदार्थमाह अनवच्छिन्न इति । अभिद्रोहः परदुःखोत्पादनानुकूलो व्यापारः । तद्विरोधी संकल्पोऽनभिद्रोहः । नञ्रापर्युदासत्वात् ॥ ( १३ ) **सौम्यः** सोमसधर्मः परानुपतापकः ॥ ( १४ ) **क्षमा** अपकृतस्य प्रतीकारबुद्ध्यनुत्पादः ॥ ( १५ ) **उग्रत्वं** पराभिभवशीलत्वम् ॥

[ १३ ]

( १४ ) **यायावराः** अनिकेताः ॥ ( १८ ) **विष्ठितः** विशेषेणाचारेण स्थितः ॥ ( २३ ) **भावितं** दृढवासनम् ॥ ( २५ ) **उपायंस्ये उपयंस्ये** इति वा पाठः ॥ ( २९ ) **निवेशाय** विवाहाय ॥ ( ३५ ) **अनिलसारथिः** अग्निः ॥ ( ४० ) अन्तः एव **अन्तकः** क्षयः । स्वार्थे कः प्रत्ययः ॥

[ १४ ]

( ७ ) **अतिसर्गः** दानम् ॥ ( ८ ) यैर्गुणैर्बुद्धिमारुढैः शत्रूणामुत्साहं संकुचति तत् **तेजः** । **विक्रमः** शस्त्रवाहनाद्यधिष्ठानम् ॥ ( १२ ) **दशतीर्दश**

१ Ed घिष्ठितः. २ Ed उपयंस्ये. ३ C सेनाशस्त्रवाहनाद्यधिष्ठानम्.



दशतिः शतं दशसहस्रमित्यर्थः ॥ ( १६ ) **अध्यर्धं** सार्धम् ॥

[ १५ ]

( ९ ) **अनन्तकल्पं** अनन्तमिव । **उद्विद्धं** उन्नतम् ॥ ( १२ ) कलश इव उदधिः **कलशोदधिः** सागरः ॥ ( १३ ) **वेत्स्यध्वं** लप्स्यध्वम् ॥

[ १६ ]

( ६ ) **अनन्तो** नागराजः ॥ ( १० ) **अकूपारः** समुद्रः ॥ ( १२ ) **नेत्रं** मन्थनरज्जुः ॥ ( ३१ ) **कलशः** सागरः ॥ ( ३३ ) **शतेन सहस्राणां** योजनानामन्तो यस्य तस्मात् । **समान इव** सदृश इव अर्थात् सागरेणेति बोद्धव्यम् ॥

[ १७ ]

( १ ) **आवरणमुख्यानि** कवचानि ॥ ( ११ ) **प्रासाः** कुन्ताः ॥ ( २३ ) **प्रसह्य** हठेन ॥ ( ३० ) **किरीटिने** नरार्य ॥

[ १८ ]

( २ ) **उच्चैःश्रवा नु किंवर्णः** इत्यत्र **नु** वितर्के । **विपणावहे** वाग्द्यूतं प्रवर्तयावहे ॥ ( ४ ) **दीव्य** क्रीड ॥ ( ६ ) **जिह्मं** कौटिल्यम् ॥ ( ९ ) **दैवं** प्राक्तनं कर्म ॥ **विषहर्णीं** विषघ्नीम् ॥

[ १९ ]

( १ ) **व्युष्टायां** दग्धायाम् ॥ ( ६ ) **पातालज्वलनो** वडवानलः । बध्यतेऽस्मिन्निति **बन्धनम्** ॥ ( ११ ) **गां विन्दता** पृथ्वीं लभमानेन ॥ ( १२ ) **ब्रह्मर्षिणा** अत्रिणा ॥ ( १३ ) **युगं** सृष्टिः **तस्यादिः** पूर्वः प्रलयः तत्काले **शयनं** शय्या ॥ ( १५ ) **अभिसार्यमाणं** गुप्तं अभिगम्यमानम् ॥

( २४ )

( ९ ) **अरिष्टं** अविघ्नम् ॥

१ Ed पूर्वार्धकाय° ( for अध्यर्धं ). २ Ed शतसहस्रांशुः ( for शतसहस्रान्त ). ३ After this C ins शतसहस्त्र्यां लक्षरूपायां. ४ Mss तु ( for नु ).

( २६ )

(१९) **न तां वध्रा परिणह्येत् शतचर्मा महानणुः ।** अनेन शाखायाः पृथुतामाह[1] । **वध्रो** वरत्रा एकचर्मरज्जुरिति यावत् । **न परिणह्येत्** न वेष्टयेत् । शतशब्दोऽयमनन्तवाची अनन्तचर्मनिर्मित इति यावत् । **महानणुः** इति[2] । दीर्घत्वात् **महान्** सूक्ष्मत्वात् **अणुः** दीर्घोऽपि तन्तुवत्सूक्ष्मः[3] । **शतचर्मा अणुः** इति अतिदीर्घता ध्वन्यते[4] ॥

[ २८ ]

(१) **समुदीर्णे** प्रेक्षणे[5] ॥ (३) **भौमनः**[6] त्वष्टा ॥ (४) **नवत्यो नवतीः**[7] एकाशीतिशतानि ॥ (२५) **पतरथः** पक्षरथः । **आस्तरत्** आच्छादितवान् ॥

[ २९ ]

(२) **अयस्मयं** लोहमयम् ॥ (४) **पर्यवर्तत** परिवृत्तिं कृतवान् अवान्तरं गतवान् इत्यर्थः[8] ॥ (११) **शुचिः** अलोलुपः[9] । **यतः** संयतः ॥ (१८) **आक्रन्दे** कलकले ॥ (१९) **ऋषेः** दधीचेः ॥

[ ३० ]

(४) पक्ष एव नाडी **पक्षनाडी** ॥ (५) **स्थाणुः** स्थावरः ॥ (११) **उपधिः** छद्म[10] ॥ (१४) **परमप्रकृष्टवान्**[11] इति मत्वर्थीयः ॥

[ ३१ ]

(१) **भुजंगमानां शापस्य मात्रा** कद्र्वा दत्तस्य । **सुतेन** अरुणेन दत्तस्य **विनतायाः** शापस्य **कारणम्** ॥

१. After this C ins तच्छ्रोवरतकः (?) चर्मरज्जुरिति यावत् । हस्तचतुष्टयपरिमितेति केचित्. २ C महाननुः इति दीर्घत्वात् । महानह्नः (णुः ?) इति वा पाठः. ३ B तन्तुर्न सूक्ष्मः. ४ After this C ins महानल्वः (?) अतिमहतीत्यर्थः. ५ C समुदीवीथोपक्षोभः (?). ६ Ed भौवनः. ७ Ed नवत्या नवतीः. ८ B om अवान्तरं गतवान् इत्यर्थः. ९ Ed आह्य वीर्यवान् (for शुचिर्यतः). १० C उपाधिः छलम्. ११ Ed परमहृष्टवत्.



[ ३२ ]

(१) **प्रेत्यभावः** मृत्वा जन्म ॥ (१७) **धर्मः** देशनालक्षणोऽर्थः । धर्मस्यैव विशेषः **शमः** । स चान्तःकरणस्य विषयेभ्यो व्यावृत्तिः । शरीरेन्द्रियतापनो धर्मः **तपः** ॥ (१८) **दमः** विषयाद्विनिवृत्तस्य मनसो विवक्षिते तत्त्वे विनियोगयोग्यता । **प्रश्रयः**[1] प्रकृष्टो मार्गः[2] ॥

[ ३३ ]

(५) **अव्ययस्य** अविनाशिनः । **अप्रमेयस्य** व्यापकस्य । **सत्यस्य** परमार्थस्य । एतैर्विशेषणैर्ब्रह्मण इति यावत् ॥ (७) **अनामयं** हितम् ॥ (८) **यथा नष्टमार्गं** दृष्टवन्त इत्यर्थः ॥ (९) **यथा वापि पराभवेत्** निष्पन्नोपि फलं न कुर्यात् ॥ (१०) **मन्त्रबुद्धिविशारदाः मन्त्रो** रहस्यं तस्य **बुद्धिः** विनिश्चयः तया **विशारदाः** पण्डिताः ॥ (११) **भिक्षामः** याचामः ॥ (१८) **कृतं** प्रतिकृतम् ॥ (२८) **नैष्ठिकी** निष्ठानुकूला ॥

[ ३४ ]

(२) **स च राजा तथाविधो न** भवतीत्यन्वयः[3] ॥ (३) **दैवेन** प्राक्कृतेन कर्मणा[4] । **उपहतः** पीडितो **यो भवेत् स दैवं** शुभं कर्म समाचरेत् ॥ (५) देवानां **वचोऽहमश्रौषम्** इति ॥ (६) **तीक्ष्णास्तीक्ष्णा** इति नागा इति शेषः ॥ (११) **यन्निमित्तम्** इति क्रियाविशेषणम् ॥

[ ३५ ]

(८) **विचीर्णं**[5] अनुष्ठितम् ॥ (१२) **नित्ययुक्तान्** नित्योद्योगभाजः ॥

[ ३६ ]

(३) **जरा** इत्यादि । **जरा क्षयो दारुणो** जराहेतुकत्वात् । **कारु** शरीरं करणशीलत्वात् । पदार्थद्वयं व्याख्याय वाक्यार्थं व्याचष्टे **कारु तस्यासीद्** इति ॥

१ Ed प्रशमेन (for प्रश्रयेण). २ C प्रश्रयः प्रकृष्टोऽनाकुलः. ३ B भवतीत्यर्थः. ४ C दैवेन प्राक्तनेन कर्मणा. ५ Ed विस्तीर्णं.

( ४ ) **जरत्कारु[1]** इति जरत् कारु शरीरं यस्येत्यर्थः[2] ॥ ( ८ ) **संप्राप्ते** परिसमाप्ते । **कस्मिंश्चिदेव तु** संध्यालक्षणे[3] ॥ ( १३ ) **पूर्वरूपं** इत्यादि । **स्वर्गगतिः** मरणम । तां **प्रति पूर्वरूपम्** । मरणक्रियायाः प्रथमोत्पात्तिर्बाणप्रहारो नाम । **नूनं** इत्युप्रेक्षायाम् ॥

[ ३८ ]

( ८ ) **क्रोधः** अपकारोच्छेदकर्तव्यताबुद्धिरूपः यस्मिन् जाते ज्वलितमिवात्मानं मन्यते ॥ ( ९ ) **शमः** कोपनीयरञ्जनीयविषयान्मनसो व्यावृत्तिः । **क्षमा** अपकारे प्रतीकारबुद्ध्यनुत्पादः ॥ ( १३ ) **कृपा[4]** परदुःखप्रहाणेच्छा ॥ ( १९ ) **मृत्युः** शरीरं परित्यज्य मनसो गमनम् ॥ ( २४ ) **अनुक्रोशात्मता** कृपाप्रधानता । **परितापः** अनुचिते कृते किं मया कृतमिति बुद्धिसंतापः ॥ ( २७ ) **उद्विग्नमनसः[5]** दुःखितमनसः[6] ॥ ( ३४ ) **वयोतिगः** वृद्धः ॥ ( ३८ ) **अहं** इति च[7] **स** इति च[7] शब्दावहंकारातिशयं द्योतयतः ॥

[ ३९ ]

( ५ ) **आशी** दंष्ट्रा । तस्यां **विषं** यस्य ॥

[ ४० ]

( ८ ) **वपुष्टमा** काशिराजसुता ॥ ( ११ ) **वरं** श्रेष्ठम् । **प्रतीतरूपं[8]** प्रख्यातरूपम् । **अवरोधं** अन्तःपुरम् ॥

[ ४१ ]

( १ ) **यत्रसायं** अस्तमनं तत्र **गृहं** स्थितिर्यस्य ॥ ( ४ ) **वीरणं** उशीरम् । **आखुः** मूषकः ॥ ( ११ ) **कामं** यथेष्टम् ॥ ( १७ ) **तन्तुः** संततिः ॥ ( २० ) **नष्टसंज्ञाः** नष्टज्ञानाः ॥ ( २१ ) **प्रजायस्व** पुत्ररूपेण । ( २५ ) **तुदन्** व्यथयन् ॥

---

१ C om जरत्कारुरिति. २ C स तथेत्यन्वयः ( for यस्येत्यर्थः ). ३ After this B ins अपरेण कलिलक्षणेन. C संध्यालक्षणेन कालेन. ४ Ed दया° ( for कृपा° ). ५ Ed संविग्नमनसः. ६ B °मनसाः. ७ B om च. ८ C om from प्रतीतरूपं up to कामं यथेष्टम्.



[ ४२ ]

( १ ) **संदिग्धा** अनवधारितविशेषा ॥ ( २ ) **दण्डं** निग्रहम् । **अकृतात्मनः** असंस्कृतमनसः ॥ ( ३ ) **दिष्ट्या** कल्याणम् ॥ ( ४ ) **ऊर्ध्व** अपतनशीलं **रेतो** यस्य । **प्रापयेयं** नयेयम् । **अमुत्र** जन्मान्तरे ॥ ( ६ ) **निवेक्ष्ये** विवाहयिष्यामि ॥ ( ७ ) **न भरेयं** न पुष्णीयाम् ॥ ( ८ ) **निवेशं** विवाहम् ॥ ( १६ ) **प्रवृत्तिं** वार्ताम् ॥ ( १९ ) **मोक्षभावः** मुमुक्षा । **द्वन्द्वीभूतः** दुःखीभूतः ॥

[ ४३ ]

( ६ ) **शयनं** खट्वादि । **स्पर्ध्यं** घर्षसहम् । **आस्तरणं** भूमिकादि[1] ॥ ( १० ) **श्वेतकाकीयैः** प्रसिद्धैः बकचरितैर्वा ॥ ( २० ) **प्रादुष्कृतः** उद्बोधितः ॥ ( २३ ) **विभावसोः** सूर्यस्य ॥ ( २५ ) **संनिवेशनं** गृहम् ॥ ( ३१ ) **पर्यश्रुनयना** पारि सर्वतोऽश्रुपूर्णनयना ॥ ( ३५ ) **मोघो** निष्फलः ॥

[ ४४ ]

( ७ ) दुःखेन वास्यत इति **दुर्वासः** ॥ ( ११ ) **स्वैरं** यदृच्छा । **संपरायः** परलोकः । तस्मै हितः **सांपरायः** ॥ ( १३ ) **व्येतु** व्यपगच्छतु ॥ ( १७ ) **प्रजज्ञे** पुत्ररूपेण जातः ॥ ( २२ ) **हिरण्यदः** ज्ञानदः ॥

[ ४५ ]

( ७ ) **चातुर्वर्ण्यं** चत्वारो वर्णाः ॥ ( ८ ) हन्तव्यबुद्धिः **द्वेषः** ॥ ( १४ ) **आत्मवान्** आत्महितः । **मेधावी** धारणावान् ॥ ( १५ ) **दिष्टान्तं** दिष्टेन दैवेनान्तो विनाशः ॥ ( १७ ) **जातु** कदाचित् ॥ ( २३ ) **वयस्थः** वृद्धः ॥

[ ४६ ]

( ६ ) **स्वेष्वङ्गेषु यतं** करचरणादिषु निवृत्तव्यापारम् ॥ ( ८ ) **स्थविरैः** वृद्धैः गुणैरिति शेषः ॥ ( १३ ) **यत्तः** प्रयत्नवान् ॥ ( ४१ ) **अपाचितिः** वैरानिर्यातनम् ॥

---

१ C तुलिकादि (?).

Continued from Vol. XXII, p. 170.

[४७]

(१२) **दीक्षयामासुः** व्रतं ग्राहितवन्तः ॥ (१३) **उत्पन्न[1] आसीत्** इत्यन्वयः ॥ (१५) **सूतः** सवनात् । **यस्मिन्देशे च काले च** विघ्नदेशोपन्यासः (?) शापेनेति[2] ॥ (१७) **पर्यक्रामन्** पर्यक्रमं अनुकृतवन्तः[3] ॥

[४८]

(२) **सदस्याः** प्रेक्षकाः ॥ (१२) **कुल्या** कृत्रिमा सरित् ॥ (१५) **आगः** अपराधः ॥ (२०) **कश्मलं** मोहः ॥

[४९]

(४) **आविप्लवा[4]** सती ॥ (२५) **मनोज्वरः** चिन्ता ॥

[५०]

(१) **भारताग्र्य[5]** भारतप्रधान । **स्वस्तिनोऽस्तु प्रियेभ्यः[6]** इत्यात्म[7]भावोपदर्शनं वासुकिं जनमेजयं सपरिवारमात्मानं चाधिकृत्य । तत्र वासुकेश्वाणं जनमेजयस्याकृतापराधपन्नगहिंसार्जनितपापानुत्पत्तिः[8] स्वस्य च विशिष्टपुण्योत्पत्ति-रिति[9] स्वस्तिशब्देन विवक्षितम् । एतच्च पूर्वापरयज्ञादि स्तुतिजनितपुण्यफलं ममेत्यभिप्रायः ॥ (८) **नैषां[10] ज्ञानं विद्यते ज्ञातुमद्य** प्रागेव ज्ञातमित्यर्थः ॥ (१०) अभिमुखीकर्तुं[11] अग्निं स्तौति **विभावसुः** इति । कोऽपि[12] मदभिप्रेत-विरोधी माभूदिति । **प्रतीतः[13]** अनुकूलः । **वष्टि** वहति ॥ (११) **प्रयत्नो धृतिः** ॥[14] (१३) **प्रभावः** दैवानुकूल्ितं तेजः ॥ (१४) **नियतः** वशीकृतः ॥ (१६) **और्वः[15]** वडवानलः । **त्रेतां** अग्नित्रयी ॥

---

१ B om from उत्पन्नं up to अनुकृतवन्तः. २ After this C ins क्षेत्राद्वा स्थः (?). ३ C reads पर्यंकर्मं (?) पर्यक्रमं अनू (?) कृतवन्तः. ४ Ed आविक्लवा. ५ B भारताद्य, C gives भारताग्र्य in the margin. ६ C om स्वस्तिनोऽस्तु प्रियेभ्यः. ७ C प्रत्यात्म°. ८ C °पराधम एवमहिंसां (?). ९ B विशिष्टजन्मोत्पत्तिरिति. C विशिष्टगुणोत्पत्तिरिति. १० C तेषां. ११ C °मुखीकृत्य. १२ C om from कोऽपि up to प्रयत्नो धृतिः. १३ Ed प्रदीप्तः १४ After this B ins अवसादः अन्तरम्भहेतुः. १५ Ed और्वत्रिता (for और्वत्रेता).



[५१]

(४) **विद्विषाणः** विद्विषन्[1] ॥ (७) **पुराणं** चिरंतनम् । **आगम्य** समन्तात् ज्ञात्वा[2] ॥

[५३]

(४) **न प्रत्यभात्[3]** न प्रतिभासारूढः[4] ॥ (६) **गां चक्रं चान्तरा[5]** उक्ष्णः[6] रथाङ्गस्य च मध्ये समय इति यावत् ॥ (८) **सूतः** सूत्रधारः ॥ (१३) **अवभृथो** यज्ञसमाप्तिः ॥ (२४) **दिष्टान्तः** प्राक्तनस्य क्षयः ॥ (३०) **विचक्ष्व[7]** विशेषेण कथय ॥ (३४) **कथ्यति[8]** कथ्यमाने ॥ (३६) **जुषस्व** सेवस्व ॥

[५४]

(३) **इष्टया** इच्छया । **अवीवृधत्** वर्धितवान् ॥ (४) **नाति** नातिक्रामति । **प्रसूत्या** कुलेन । **मन्युना** यज्ञेन ॥ (५) **विव्यास** पृथक् पृथक् चकार ॥ (६) गुणवतो दर्शनश्रवणगोचरे वर्तमानैः गृह्यमाणो गुणौघः **कीर्तिः** । स एव दर्शनश्रवणगोचरेऽवर्तमानैर्गृह्यमाणो **यशः** इति विभागः ॥ (८) **मेधैः[9]** यज्ञैः ॥ (९) **मूर्धावसिक्तः[10]** अभिषिक्तः । **संस्तरो** यज्ञवाटः ॥ (१३) **कृष्णाय** व्यासाय ॥ (१६) **प्रतिवेद्य** प्रतिव्याप्य ॥ (१८) **प्रत्यक्षदर्शिवान्** प्रत्यक्षदर्शी । **प्रत्यक्षदर्शनः** इति वा पाठः ॥

[५५]

(३) **श्रोतृपात्रं[11]** श्रोता तात्पर्यावधारणक्षमः **पात्रं** अधिकारी । **अपृष्टं[12]** अक्षममिति यावत् । **गुरोः** व्यासस्य । **वक्त्रपरिस्पन्दः[13]** वचनं कार्ये कारणोपचारात् । तेन या **मुद्** प्रीतिः तया । **प्रोत्साहयति[14]** प्रयत्नविशेषभाजं करोति ॥

---

१ C विद्विषाणः विद्वेषकः शत्रुरिति यावत्. २ C ज्ञातत्वात्. ३ C om न प्रत्यभात्. ४ C प्रतिभारूढः. ५ Ed गोचक्रस्यान्तरा. ६ b c अक्षस्य. ७ Ed त्वं वै विचक्षणः (for विचक्ष्व नः). ८ Ed सूतज (for कथ्यति). ९ Ed देवैः. १० C मूर्धाभिषिक्तः. ११ Ed श्रोतुं पात्रं. C om श्रोतृपात्रं श्रोता. १२ C अमृषं (?). १३ Ed वक्त्रं परिस्पन्दः. १४ Ed प्रोत्साहतीव.

(७) **वीर्यं** उत्साहः स च प्रयत्नः देशकाल[1]पात्रमर्यादानतिक्रमेण उत्साहवृद्धिः । **ओजः** सहः[2] ॥ (८) **निग्रहः** बन्धनादिकम् । **निर्नाशः**[3] मरणम् ॥ (१२) **अदंशयत्** सर्पैरखादयत्[4] ॥ (१३) **विप्रकारः** अपकारः ॥ (१५) **दैवेन** प्राक्तनकर्मणां । **भावी अर्थः** राज्यादिः तस्मै **रक्षितान्** ॥ (476*–५) **क्षत्ता** विदुरः ॥ (476*–१५) **समनुरोधनं** प्रकटता ॥ (४२) **विद्रुतभूयिष्ठं** नष्टप्रायम् ॥

## [ ५६ ]

(४) **अवध्यान्** इत्यनेन लोकातीतं प्रभावातिशयं दर्शयति ॥ (६) **क्रोधं धृतवान्** निरुद्धवान् ॥ (१०) **अस्यन्** क्षिपन् ॥ (१६) **परिनैष्ठिकी** परनिश्चयवती ॥ (२०) **पुंसवनं** पुमांसः सूयन्तेऽस्मिन् श्रुत इति । **महिषी** कृताभिषेका राज्ञी ॥ (२४) **अनसूयतां** गुणेषु दोषमनारोपयताम् ॥ (495*) **अनेकजननं** अनेकाभ्यः कृत्तिकादिभ्यो जननमुत्पादः ॥ (३२) **नित्योत्थितो**[10][11] नित्योद्युक्तः ॥ (२७) **रत्नं** जात्यापेक्षया उत्कृष्टम् ॥ (494*) **नियतं** निश्चयेन कृतम् ॥ (२६) **विहरता**[12] विविधान् देशकालान् गमयता ॥ (२८) **ब्रह्मभूयं** ब्रह्मभावम् ॥ (३०) **एनः** पापम् ॥ (२९) **श्राद्धं** श्रद्धया चरन्[13] ॥ (३३) **धर्मे चार्थे च** इत्यादि विषयभेदमाह । **च**कारास्तत्तदधिकारिभेदं तत्फलभेदं **च** समुच्चिन्वन्ति । शास्त्रभेदाय यद्वा तद्विरोधिनं धर्मोऽधर्मश्च अर्थोऽनर्थश्च एवमन्यत्रापि । **इह** न्यूनाभिधानशङ्कां निरस्यति **यदिहास्ति तदन्यत्र** इति । अन्यत्राधिकाभिधानं शङ्कां निरस्यति **यन्नेहास्ति न तत्क्वचित्** इति ॥ इति भारतप्रशंसा ॥

---

१ C om ०पात्र०. २ C om ओजः सहः. After उत्साहवृद्धिः C adds सत्यं तेजो तपो यज्ञस्य पराभिभवशक्तिः. After सहः B adds उपायज्ञस्य (?) पराभिभवशक्तिः. ३ Ed निर्वासान्. ४ B अदंशयन् सर्पैरखादयन्. ५ B प्राक्कर्मणा. ६ B भव्योऽर्थो. ७ C हितत्वात्. ८ C विद्विषः. ९ Ed समनुबोधनात्. १० Ed सदोत्थायी. Mss give a different order of stanzas 24 to 33 from that in Ed. ११ After this Mss add सर्वथा सतामसतां वा वर्तमानो व्यवहारः । कृतैरुचितैः । अकृतैरनुचितैः । कृतैरल्पतया न शोच्याः भूयस्त्वात् । अकृतैश्च नष्टत्वात्. १२ C विवहता. १३ After this Mss ins श्रव्यं हितोपदेशत्वात् । श्रुतिसुखं कविधर्मोपपन्नत्वात्.



## [ ५७ ]

(१) **राजा** रञ्जकत्वात् । **महीपतिः** पालकत्वात् ॥ (२) **ग्रहणीयं** सिद्धादायम् ॥ (६) **लोक्यं** लोकाय हितम् ॥ (८) **स्वारक्ष्यः** स्वयमारक्षा[1] यस्मिन् ॥ (१५) **वैजयन्तीं** विजयनिमित्तं । **धारयिष्यति** पतनप्रतिषेधेन ॥ (१६) **लक्षणं** चिह्नम् ॥ (१८) **प्रवेशः** पूजार्थमारोपणम् ॥ (२०) **अपरेद्युः** दिनान्तरे । **अत्युच्छ्रयैः**[2] उत्थापनम् । **पिटकैः** वस्त्रवेष्टितकौपिनकैः ॥ (२१) **हासरूपेण**[3] क्रीडावताररूपेण । तस्य विशेषणं **स्वयमेव गृहीतेन** इति ॥ (२२) **देवकृतां** देवाय कृताम्[4] ॥ (२३) **महं** उत्सवम्[5] ॥ (२६) **वरदानं** एव **महायज्ञः**[6] ॥ (२७) **चेदिः** दहालैः[7] ॥ (२८) **सम्राट्** आज्ञया राजशासकः ॥ (३२) **पुरोपवाहिनीं** पुरसमीपे वाहिनीं ॥ (३६) **पुंसवने** पुंसवनयोग्ये ॥ (३९) **प्रचस्कन्द** प्रपात ॥ (४२) **आरात्** समीपे ॥ (४९) **उज्जह्रुः** उद्धृतवन्तः ॥ (५४) **दाशाय** कैवर्ताय ॥ (५५) **मत्स्यगन्धा**[8] मत्स्यसदृशगन्धा ॥ (५८) **पारावारे** परार्वाक् तीरयोः ॥ (७०) **दर्शयिष्यामि** आत्मानमिति शेषः ॥ (७२) **पादापसारी** पादात् पादमपसरति ॥ (७३) **ब्रह्मणे**[9] वेदस्य कर्त्रे[10] ॥ (८२) **कुन्ती** भोजकन्या ॥ (८३) **महायशाः** सर्वैर्गृह्यमाणगुणः[11] ॥ (८४) प्रधीयते कार्यजातमस्मिन्निति **प्रधानम्** ॥ (८५) **आत्मा**

यदाप्नोति यदादत्ते यदात्ति विषयानिह ।
यच्चास्य सन्ततो भावस्तस्मादात्मेति कीर्तितः ॥

**सत्त्वयोगध्रुवाक्षरं**[12] सत्त्वयोगो ध्रुवाक्षरे यस्मिन् ॥ (८६) **हंसं** सोऽहमित्यवगच्छतीति अथवा देहान्तरं गच्छतीति[13] ॥ (९९) **युयुत्सुः** शताधिकः । **करणो** वैश्यापुत्रः ॥ आदि० संभवे ॥

---

१ B b यो (सु) रक्ष्यः सुखमारक्ष्ये (?). २ Ed क्रियते उंच्छ्रयः (for क्रियतेऽत्युच्छ्रयः). C अभ्युच्छ्रयः. ३ Ed हास्यरूपेण. ४ B b देवकृतां देवो रुद्रः. ५ C सह्य उत्साहम् (corrupt). ६ b वरदानमेषमश्वयज्ञः. ७ C चेदिः मयानकः ८ Ed आसीन्मत्स्यसगन्धेव (for आसीत्सा मत्स्यगन्धेव). ९ Ed ब्रह्मणो. १० C om कर्त्रे. ११ C सर्वैर्गृह्यमाण०. १२ Ed सत्त्वयोगं ध्रुवाक्षरं. १३ b C हंसः हन्ति अवगच्छतीति(?).

[ ५८ ]

( ५ ) **अभिचक्रमुः** स्वर्गतवत्यः ॥ ( ६ ) **समापेतुः** संगतवन्तः ॥ ( ८ ) **ऋध्यत** वृद्धिं गतवत् । **ब्राह्मणोत्तराः** ब्राह्मणप्रधानाः ॥ ( १० ) **आधिः** मानसी पीडा । **व्याधिः** धातुकरणरसवैषम्यम् ॥ (११) अपाङ्ग इव **अपाङ्गः सागरो** यस्याः सागरान्तामित्यर्थः । **गां** पृथ्वीम् । **गजेन्द्रगत** इति जनमेजयस्य संबोधनम् । **अध्यतिष्ठत्** अधिष्ठितवान् ॥ ( १४ ) **स्वादु** इति व्यवहितमपि वर्षेणेति योजनीयं प्रजा अतिभोग्यतयेति शेषः ॥ ( १८ ) **ब्रह्म** वेदः ॥ ( २० ) **फेनपांश्च तदा[1] वत्सान्न[2] दुहन्ति** इति यावद्वत्साः स्वयं न विरमन्ति पानात्[3] तावन्न दुहन्तीत्यर्थः ॥ ( २६ ) **आदित्या** देवाः ॥ ( ३१ ) **अवलिप्ताः** साहंकाराः । **परीयुः** परिगतवन्तः ॥ (३४) **धर्षयन्तः** पीडयन्तः । **वीर्यमदः** वीर्यं कायिकी शक्तिः तयो[4] मदः पराभवेच्छा येषाम् । **मत्ता** विवेकशून्याः ॥ ( ३५ ) **भूरिपत्रैः[5]** भूरिवाहनैः । **भूरियत्नैः** इति वा पाठः । **उपचक्रमे** उपतस्थे ॥ ( ३८ ) **संवृतं** वेष्टितम् ॥ (४१) **तत्प्रधानात्मनस्तस्य** सा भूरेव प्रधानमात्मनि शरीरे यस्य । पार्थिवशरीरो हि **स्वयंभूः[6]** ( ४३ ) **विभुः** व्यापकत्वात् । **प्रभव** उत्पत्तिहेतुत्वात् । **ईशः** अहतेच्छत्वात्[7] । **शम्भुः** कल्याणमस्माद्भवतीति । **प्रजापतिः** प्रजापालनात् ॥ ( ४६ ) **तिरोधाय[8]** अन्तर्धाय ॥ ( ४८ ) **तथ्यं** सत्यम् । **अर्थ्यं** अर्थाय हितम् । **पथ्यं** परिणतिस्वरसम् ॥ ( ५१ ) **शोधनाय** दोषहानाय ॥ आदि अंशावतरणे[9] ॥

[ ५९ ]

( १ ) **संविदं** मिथःकथाम् ॥ ( २ ) **क्षयान्** गृहान्[10] ॥ ( ३६ ) **ब्रह्मलोकप्रभावनाः** ब्रह्मैव[11] लोकः **ब्रह्म** व्यापकत्वाद् **लोकः** प्रकाशकत्वात् तस्य **प्रभावनाः** साक्षाद्दर्शिनः ॥ अंशावतरणे ॥

---

१ Ed तथा. २ C om from वत्सान्न up to यावद्वत्साः. ३ B om पानात्. ४ B तेषां. (?) ५ Ed भूरिभिः तैः महासुरैः. ६ b पार्थिवशरीरे हि सुखंभूतः. ७ b ईशानेकत्वात् (?) ८ Ed विरोधाय. ९ b C om आदि अंशावतरणे. १० After this b C ins आदि अंशावतरणे. Further B C ins सर्वविधा सिद्धिर्यस्मात्. b ins सर्वक्रियासिद्धिः यस्मात्. ११ C om from ब्रह्मैव up to साक्षाद्दर्शिनः.



[ ६० ]

( ८ ) **पतङ्गः** सूर्यः ॥ ( ९ ) **पुत्रवतां** इति स्वार्थे मत्वर्थीयः पुत्राणां **वर** इत्युक्तं भवति । अथवा बहुपुत्रतया **पुत्रवतां वरः** ॥ ( १३ ) **कीर्तिः** देशान्तरे कालान्तरे स्वयमदृष्टाश्रुतजनबुद्धिसमारूढो गुणौघः । **लक्ष्मीः** धनस्य स्वपरोपयोगसंपादनशक्तिः । **धृतिः** अवसादहेतुनिपातेऽप्यनवसन्नता । **मेधा** धारणावती धीः । **पुष्टिः** करणीये शक्तिसंपत्तिः । **श्रद्धा** आस्तिक्यबुद्धिः । **कृपा[1]** परदुःखप्रहाणेच्छा ॥ ( १४ ) **बुद्धिः** निश्चयः । **लज्जा** करणीयान्निवृत्तिः । **मतिः** परामर्षज्ञानम् । **धर्मस्य[2]** देशनालक्षणस्य अर्थस्य मूर्तत्वेऽपि कृतशरीरग्रहस्य कीर्त्यादयः कृतशरीरग्रहा एव **पत्न्यः** । **द्वाराणि** निमित्तानि ॥ (१५) **कालस्य नयने** परिवर्तने । **नक्षत्रयोगिन्यः** असकृदविद्यमानगतिविरोधिसंज्ञाः ॥ ( ३१ ) **समः[3]** अरिमित्रोदासीनेषु निर्विशेषता । **कामः** रागः स च सुखानुशायी । **हर्षो** अनुकूलवेदनीयः । ते एते अमूर्ताश्चापि मूर्तिपरिग्रहात् पुत्रतां गताः ॥ ( ३६ ) **त्रयस्त्रिंशतं** अष्टौ वसवः एकादश रुद्राः द्वादशादित्याः वषट्कारः प्रजापतिश्चेति । **अन्वयः** जन्यजनकसन्तानः । **पक्षः** भागः । **कुलं** अन्वयः एव परंपराशुद्धः ॥ ( ४१ ) **प्राणयात्रार्थी[4]** भोगनिःस्पृहः । **वर्षावर्षे भयाभये नियुक्तो** ग्रहत्वात् ॥ ( ४३ ) **योगः** अपूर्वस्योत्पादः । **क्षेमः** लब्धस्य परिपालनम् ॥ ( ४९ ) **ययोः** यत्र **ब्रह्मणो लक्षणं तिष्ठति** इत्यन्वयः ॥ ( ५६ ) **कलहंसः** पारावतः ॥ ( ६३ ) **द्वीपिनः** चित्रकाः ॥ ( ६६ ) **पिण्डफलाः** पनसादयः[5] ॥ आदि अंशावतारे ॥

[ ६१ ]

( ६१ ) **राजपूगः** राजसमूहः ॥ **आमुक्तकवचो** बद्धसन्नाहः ॥ ( ९८ ) **सुबलात्मजा** गान्धारी ॥ ( १०२ ) **प्रभावाप्ययौ** सृष्टिसंहारौ ॥ आदि अंशावतरणं समाप्तम् ॥

( ६२ )

( ६ ) **न कृष्याकरकृत्[6]** शाल्यादि कृषिं पूगाद्याकरं च न करोति अकृष्ट-

---

१ Ed क्रिया ( for कृपा ). २ B om from धर्मस्य up to पत्न्यः. ३ Ed शमः. ४ Ed प्राणयात्रार्थे. ५ C पालाशादयः. ६ Ed नाकृष्यकरकुज्जनः.

पथ्यत्वात् भुवः ॥[1] (९) **दैवे कर्मणि निःस्पृहाः** प्राक्तनकर्मावलम्ब्य नोदासते किं तु सदा पुरुषकारपराः ॥ (१०) **मदवन्ति**[2] फलवन्ति । **वसुमती** धनवती भूमिः । वसुमतीति पुनरुक्तवदाभासोऽलंकारः[3] । **रसवती** इति वा पाठः ॥ (११) **वज्रसंहननः** दृढकायः ॥ (१३) **बले** पराभिभवे । **तेजसा** प्रतापेन । **अक्षुब्धत्वं** गम्भीरता । **सहिष्णुता**[4] क्षमा[5] ॥ (१४) **प्रसन्नः** परोक्षेऽपि गुणग्राही ।

**भूयो धर्मपरैर्भावैर्विदितं जनमावसत् ।**

**धर्मपरैः** अभिप्रायैः पुनः पुनरवधारितं समीपे कुर्वन् नाविदितं नाप्यधार्मिकतया विदितम् ॥ आदि शाकुन्तले ॥

**[ ६४ ]**

(२) **ईरिणं**[6] ऊषरम् ॥ (३३) **पूगयज्ञियाः**[7] बहुचेष्टा देवास्तेषाम् । **संहिता** वर्णानामेकप्राणयोगोऽव्यवच्छिन्नः पाठः । **पदं** सुप्तिङन्तम् । **क्रमः** द्वयोर्द्वयोः पदयोः सन्धानमपृथक्त्ववर्जम् ॥ (३४) **शब्दसंस्कारः** लोपागमविकारः प्रकृतिलक्षणः ॥ (३५) **न्यायः** आन्वीक्षिकी ॥ (३६) **समाहारः** समूहः तस्य **समवायः** संबन्धः । **विशेषकार्याणि** अन्यैरशक्यानि ॥ (३७) **स्थापना** प्रतिज्ञा । **आक्षेपः** चालना । **सिद्धान्तः** अस्तीत्यभ्युपगमः । एषां **परमार्थः** तत्त्वम् । **लोक** ऐन्द्रियिकं ज्ञानं तेनैव **आयता** इति **लोकायतिकाः** ॥ आदि० शाकुन्तले ॥

**[ ६५ ]**

(३१) **मतङ्गः** त्रिशङ्कुः ॥ (३४) **आतिक्रुद्धः प्रतिससर्ज** इत्यन्वयः ॥ आदि० शाकुन्तले ॥

**[ ६६ ]**

(३) **अपोवाह** अपसारितवान् ॥ (४) **अभिलिङ्गन्ती**[8] विलिप्य-

---

१ After भुवः C ins स्वयमेवोत्पाद्यमानत्वात्. २ Ed फलवन्ति. C om मदवन्ति फलवन्ति. ३ After this C ins मदवन्ति. ४ Ed सहिष्णुत्वे. ५ C om क्षमा. ६ B om the passage from ईरिणं ऊषरम् up to प्रतिससर्जेत्यन्वयः ( Adh. ६५ ). ७ Ed गयाह्निकः ८ C अभिलिप्सतीति लिप्समानाः.



माना ॥ (५) **गृद्धां** साकाङ्क्षाम् ॥ (१३) **शरीरकृत्** शुक्रस्रावकः । **प्राणदाता** अभयप्रदः ॥ आदि० शाकुन्तले ॥

**[ ६७ ]**

(१) **सुव्यक्तं**[1] इत्युत्प्रेक्षायाम् । **राजपुत्रीं** इव त्वां जाने इत्यर्थः ॥ (२) **परिहाटके** केयूरौ ॥ (८) **ब्राह्मः** वरमाहूय दानम् । **दैवः** ऋत्विजे दानम् । **आर्षः** गोमिथुनेन दानम् । **प्राजापत्यः** चर धर्ममिति दानम् । **आसुरः** द्रव्यं गृहीत्वा दानम् ॥ (९) **गान्धर्वः** समयान्मिथः । **राक्षसः** भित्त्वा छित्त्वा हरणम् । **पैशाचः** सुप्तायां प्रमत्तायां गमनम् ॥ (११) **राज्ञां** कृताभिषेकाणाम् । **पञ्चानां** इति निर्धारणे षष्ठी । **त्रयाणां** धर्मातिशयत्वेन गुणेन पृथक्करणम् । प्राजापत्यासुराभ्यां **द्वावधर्म्यौ** इति ब्राह्मणविषयम् ॥ (२९) **चक्रं** रथचक्रम् । समुद्रपर्वतादौ **अप्रतिहतम्** ॥ (३०) **कायकं**[2] कठिनकं ससिक्यम् ॥ आदि० शाकुन्तले ॥

**( ६८ )**

(२) **त्रिषु वर्षेषु** इति ग्रहयोगविशेषात् ॥

> उदयति मृदुतांशे सप्तमस्थे च सूर्ये[3]
> यदि भवति निषेकः सूतिरब्दत्रयेण ।
> शशिनि तु विधिरेष द्वादशेऽब्दे प्रकुर्या-
> न्निगदितमनुचिन्त्यं सूतिकाले प्रयुक्त्या ॥

**औदार्यं** दानशीलता ॥ (४) **शुक्लैः** श्यावादिदोषरहितैः । **शिखरिभिः** शिखरसदृशतीक्ष्णाग्रभाययोगिभिः ॥ (२१) **संरम्भः** क्रोधः । **अमर्षः** स एव चिरस्थायी ॥ (२४) **निःसङ्गं** निःसंबन्धम् ॥ (२५) **सत्यस्य चानृतस्य** च मध्ये यत् **कल्याणं** तत्तु त्वमेव **वेद** । **बत** विस्मये । **साक्षी** पक्षपाती चेतनः । **मा अवमन्यथाः**[4] अवमतेर्मिथ्याज्ञानस्य मा विषयीकुर्याः ॥ (२७) **हृच्छयः** कामः । **मुनिं पुराणं** सनत्कुमारावतारत्वात् ॥ (३०)

---

१ Ed सुव्यक्त राजपुत्री. C अव्यक्तं. २ Ed विनिधाय ततो मारं ( for निधाय कायकं तच्च). ३ B reads उदयति मृदुभांशे सप्तमस्थे च मन्दे. ४ B पक्षपाती चेतनं (आत्मानं) मा अवमंस्थाः.

**निर्यातयति**[1] न फलवत्करोति ॥ (३१) **विघातयति** विशेषेण घातयति यातनां करोति । **दुष्कृतं** दुष्टकारिणम् ॥ (३२) **न कारणं न** प्रमाणम् ॥ (३४) **उपप्रेक्षसि** उपप्रेक्षसे[2] ॥ (४२) **प्रविविक्तेषु** रहस्येषु संस्थिताः ॥ (४५) **प्रेत्य** मृत्वा ॥ (६८) **जगतीं** पृथिवीम् ॥ (६९) **अवकीर्य** त्यक्त्वा ॥ (७२) **अनार्ये**[3] वक्रे ॥ (७३) **निरनुक्रोशा** निष्कृपा । **बन्धकी** असती पुंश्चली ॥ (७६) **अश्रद्धेयं** अनादरणीयम् ॥ (७९) **यदृच्छया** विधिं विना । **कामरागात्** विषयरागात्[4] ॥ आदि० शाकुन्तले ॥

[६९]

(२) **उत्कृष्यते**[5] अधिकतां याति ॥ (७) **इतरं** अधरम् ॥ (८) **विकत्थनः**[6] परनिन्दकः । **विहेठकः** इति वा पाठः ॥ (११) **परिवदन्** परोक्षे निन्दयन् ॥ (१३) **दोषानुदर्शिनः** दोषदर्शनशीलाः ॥ (१५) **अनास्तिकः** आस्तिकः ॥ (२०) **कपटम्** कवचम्[7] ॥ (२५) **समयः** परस्परकृता मर्यादा ॥

(२६) **अनृते चेत्प्रसङ्गस्ते श्रद्दधामि[8] न चेत्स्वयम् ।**
**आत्मनो हन्त गच्छामि त्वादृशे नास्ति संगतम् ॥**

**चेत्** शब्दो यद्यर्थः । **अनृते** यदि **ते** तव प्रसक्तिः । द्वितीयः **चेत्** शब्दो हेतौ । **न श्रद्दधामि स्वयं** अहम् । यस्मात् अनृतवादिनामित्यर्थादन्वयः । **हन्त** संबोधने । तस्माद् **गच्छामि** । **त्वादृशे आत्मनो** मम **नास्ति संगतम्** ॥ (२७) **ऋतेऽपि त्वयि** त्वया विनापि ॥ (२९) **भस्त्रा** चर्मवातप्रवेशिका । **माता** भस्त्रेव । यथा भस्त्रा पवनपूरणत्वे च नाभ्यां श्वासनिःश्वासक्लेशमिवानुभवन्ती न धम्यमानसुवर्णकार्ष्णायसादिस्वामितां प्रतिपद्यते । तथा माता गर्भधारणवाहनप्रसवादिक्लेशे भाजनमपि न तनयस्वामिनी । **पितुः** पितृस्वामिकः **पुत्रः** । तत्र हेतुः **येन जातः स एव सः** । पितैव हि पुत्रकारेण शालिबीजमिव शाल्यङ्कुराकारेण परिणमते न क्षेत्रम् । तेन पितुः प्राधान्यम् ॥ (३०) **रेतोधाः** पितृ-

[1] Ed निर्यातयति. [2] B उपेक्षसि उपेक्षसे. [3] Ed नार्यः. [4] C om विषयरागात्. [5] Ed उद्रिच्यते. [6] Ed विहेठकः. [7] C कलटम (?). [8] Ed श्रद्धासि.



संबन्धि रेतः कायाकारेण परिणतं धत्ते धारयति । **उन्नयति** ऊर्ध्वं नयति । **यमक्षयात्** यमसदनात्[1] ॥ (३२) **अभूतिः** विनाशः ॥ (४५) **चक्रं** प्रतापः ॥ (४८) **पद्मं** कोटिशतम् ॥ (५१) **आर्जवं** विहितेन मार्गेण गमनम् ॥ आदि० शाकुन्तलं समाप्तम् ॥

[७०]

(६) **मोक्षं** मोक्षहेतुम् । **सांख्यं** सांख्यशास्त्रम् ॥ (९) **दाक्षायणी वरा** अदितिः ॥ (१२) **अदीधरन्** धारितवन्तः ॥ (१४) **नाभागारिष्ट**नामा **दशमो** येषाम् ॥ (१६) **पिता**[2] राष्ट्रदानात् । जनकस्तु पिता बुधः ॥ (१९) **अनुदर्शयां चक्रे** पूज्यराज्यचरितमुवाच ॥ (२१) **विराट्** राजमान्यः । **यथावद्** विध्यनतिक्रमेण ॥ (२८) **प्रियवाससि** जायायाम् ॥ (३३) **शाश्वतीः समाः** सार्धकोटिवर्षाणि । **आर्छन्** आगच्छन् ॥ (३५) **साह्यं** सहभावः सहायकरणीयमिति यावत् ॥ (४६) **कालधर्मः** विनाशः ॥ आदि० ययाते[3] ॥

[७१]

(६) **आङ्गिरसः** बृहस्पतिः ॥ (१३) **पूर्ववयाः** तरुणः ॥ (१४) **शीलं** स्वभावः शुभा प्रवृत्तिः । **दाक्षिण्यं** अनुकूलता । **माधुर्यं** आकृतौ वचसि च प्रीतिहेतुना । **आचारः** सतां वृत्तम् । **दमः** मनसि वशिता ॥ (१८) **परवान्**[4] पराधीनः ॥ (२३) **संशीलयन्** प्रीणयन् । **प्रेषणं** आज्ञासंपादनम् ॥ (२४) **अनुगायमाना** अनुगवदाचरन्ती ॥ (२६) **शालावृकः** क्रोष्टा ॥ (३०) **शब्दाप्य**[5] आहूय ॥ (३६) **मर्त्यं** मरणधर्माणम् ॥ (३८) **सब्रह्मचारी**[6] समानगुरुः ॥ (३९) **अन्तः** फलम् ॥ (४८) **भावय** उत्पादय । **भावितो** जनितः । **धर्मवतीमपेक्षां**[7] करुणाम् । **समीक्षेथाः** स्मरिष्यसि सांप्रतं विहाय न गमिष्यसि ॥ (४९) **शुक्रस्य अर्त्यया**[8] अन्तः

[1] C om from यमसदनात् up to कोटिशतम्. After यमसदनात् B ins त्यक्तः इति पञ्चमी. [2] C om from पिता राष्ट्रदानात् up to प्रियवाससि जायायाम्. [3] C आदि शयाति. [4] Ed परमं (for परवान्). [5] Ed शब्देन. [6] Ed स ब्रह्मचारी. [7] Ed धर्मवतीमवेक्षां, C धर्म्यपक्षं करुणं (corrupt). [8] B शुक्रस्यात्यया.

पौर्णमासी । अथवा **शुक्लस्य अत्ययो** अतिशयेन गमनं पौर्णमासी ॥ (५०) **ब्रह्मराशिं** वेदराशिम् ॥ (५१) **चतुरन्वयानां** चतुर्णां वेदानाम् । अथवा **चतुरन्वयानां** आन्वीक्षिक्यादीनाम् ॥ आदि० यायाते ॥[१]

## [ ७२ ]

(११) **सौहार्दे** स्नेहे पितृपुत्रादिसाधारणे । **अनुरागे** रतिजन्मनि शृङ्गारे भर्तृविषये । **भक्तिः** वाङ्मनःकायानां तत्परता ॥ (१५) **उत्थिता** उद्युक्ता ॥ (२२) **सभाज्य** पूजयित्वा ॥ आदि० यायाते ॥

## [ ७३ ]

(४) **वायुभूतः** वायुभावापन्नः ॥ (८) **समुदाचारः** सदाचारः ॥ (११) **लप्स्यसे प्रतियोद्धारं** प्राप्स्यसि[२] मदादेशात् प्रतिमल्लं येन त्वं पातयितव्योसि ॥ (१२) **समुच्छ्रयः** अहंकारः । **सत्त्वा** लज्जा ॥ (१४) **युग्यः** सारथिः ॥ (१५) **उदपानं** कूपः ॥ (१७) **ध्यायसि** शोचसि ॥ (२२) **अवटः** गर्तः ॥ (२९) **निष्कृतिः**[३] **दुष्टकर्मणः**[४] कालेन परिशोधनम् ॥

(३६) **आचिन्त्यं ब्रह्म निर्द्वन्द्वमीश्वरं**[५] **हि बलं मम** ।

अनेन स्वबलमीश्वरतया स्तौति । अनिर्वचनीयं व्यापकं अप्रतिपक्षप्रतिहतमिति । अथवा न राज्ञ इव शस्त्रादिकं किं तु ईश्वरं बलं मम । शेषाणि तस्य विशेषणानि । नपुंसकत्वमनियमदर्शनात् ॥ आदि० यायाते ॥

## [ ७४ ]

(१) **आतिवादो** निन्दा । **तितिक्षा** सति सामर्थ्ये प्रतिकारबुद्ध्यनुत्पादः । **सर्वमिदं** विषयेन्द्रियजातम् ॥ (४) **क्षमा** उत्पन्नेऽपि क्रोधे कार्यानिष्पत्तिः ॥ (५) तितिक्षायाः फलान्तरमाह **यः संधारयते मन्युं**[६] इत्यन्वयः ॥ (९) **बुभूषता** इति णिचो लोपात् । तेन विभावयिषतेत्युक्तं

---

१ B om यायाते after आदि०. २ C प्राप्स्यासि प्रतिः पन्नं येन (corrupt). ३ Mss निकृतिः. ४ C नष्टकर्मणः. ५ Ed निर्द्वन्द्वमैश्वरं. ६ B यः संधारयति कोपं (?); C यं संधारयत इति पङ्क्तौ (?) यमित्यन्वयः (corrupt).



भवति । शिष्यमिति शेषः ॥ (१२) **वाग्दुरुक्तं**[१] वाक्कृतं दुरुक्तं ॥ आदि० यायाते ॥

## [ ७५ ]

(१५) **संग्रहीत्री धात्री**[२] ॥

## [ ७६ ]

(७) **वां** युवाम् ॥ (१५) **अनुयुक्तः** अनुपृष्टः ॥ (१८) **संसृष्टं ब्रह्मणा क्षत्रं** यौनेन संबन्धेन अत एव ब्राह्मणजातिरपि क्षत्रियेण संसर्गमर्हतीति देवयान्यभिप्रायः ॥ (१९) **तेषां तु ब्राह्मणो वरः** इत्यनेन तत्कन्यापरिणयनमपरेण क्षत्रियादिना न युक्तमित्याह ॥ (२०) **पाणिधर्मः** स्तद्धस्तग्रहणम् । **पुंभिः** पुरुषान्तरैरसेवितः स त्वया कृतः ॥ (२५) **न विषहामि**[३] न शक्नोमि ॥ (३२) **अहं पापं नुदामि ते** इति वरदानबलाद् अधर्मोऽपि धर्म इति भावः ॥ आदि० यायाते ॥

## [ ७७ ]

(२३) **भुजिष्या** दासी ॥ (२७) **राजीवलोचना** पद्मनेत्रा ॥ आदि० यायाते ॥

## [ ७८ ]

(२) **वृजिनं** पापम् ॥ आदि० यायाते ॥

## [ ७९ ]

(२) **जरा** वयोहानिः । **वली** श्लथं चर्म । **पलितं** केशशुक्लता ॥ (३) **पाप्मानं** पापं पापफलत्वात् ॥ (१९) **उडुपं** तृणकाष्ठादिघटितं संतरणसाधनं तेन **प्लवो** गमनं तेन **संतारः** पारप्राप्तिर्यत्र[४] । **न तत्र**[५] **भविष्यति** इत्यन्वयः । भुज्यत इति **भोगः**[६] पक्वान्नम् ॥ (२१) **अकालेऽन्नमादत्ते** बालभावात् । **अशुचिः** अशौचादियुक्तो **यथा न प्रजुहोति** ॥ (२३) **अग्निप्रस्कन्द-**

---

१ C om दुरुक्तं. २ B om संग्रहीत्री धात्री. ३ Ed विवहामि. ४ Ed उडुपप्लव° (for नोडुप°). ५ Ed यत्र. ६ Ed भोजशब्दं.

**नपरः** अग्नित्यागी ॥ (२४) **वरीयान्** महत्तमः । **पर्यगुः** पर्यागतानि[1] ॥ आदि० यायाते ॥

## [ ८० ]

(३) **अनुग्रहः** दयापूर्वकं दानम् ॥ (४) **आनृशंस्यं** अहिंसा । **संनिग्रहः** अपराधानुरूपो दण्डः ॥ (७) **खिन्नः** खेदकारणं भोगाय कायकरणव्यापारबाहुल्यं अथवा भोगकालावधिप्राप्तिः ॥ (२१) **भवतो** युष्मान् **अनुनयामि** अनुनये ॥ आदि० यायातं समाप्तम् ॥

## [ ८१ ]

(११) **अन्तेषु** म्लेच्छेषु ॥ (१३) **शिलोञ्छः** प्रहीणसस्यग्रहणम् । अथवा **शिलं** प्रहीणवल्लर्यादानं[2] **उञ्छः** पतितस्यादानं तौ शिलोञ्छौ **वृत्तिः** यस्य ॥ (१५) **पञ्चाग्निः** गार्हपत्याहवनीयदक्षिणाग्न्यौपसदाश्चत्वारः पञ्चमश्चादित्यः ॥ (१६) **आवृत्य** व्याप्य । **रोदसी** द्यावापृथिव्यौ ॥ आदि० उत्तरयायाते ॥१॥

## [ ८२ ]

(७) **मन्युः** मन्यूत्पादको दुर्जनव्यापारः । कारणे कार्योपचारात् । **तितिक्षावंतः**[3] क्रोधानुत्पत्तेः । अथवा **तितिक्षावतः** क्षमावतः । क्षमावतोऽपि क्रोधे तत्कार्याकरणमित्युक्तम् ॥ (८) **अरुः** मर्म[5] । **न नृशंसवादी** हिंसायुक्तं न ब्रूयात् । **हीनः** दोषः । तेन **परं नाभ्याददीत** न योजयेत् । **रुशतीं** अकल्याणीम् । हिंस्रामिति यावत् । **पापलोक्यां** पापलोको नरकलोकः तस्मै हिताम् ॥ (९) **अलक्ष्मीकतमं** निःश्रीकतमम् । **निर्ऋतिं** राक्षसीम् ॥ (१०) **अतिवादः** अधिकवचनम् ॥ (१२) **संवननं** वशीकरणम् । **मैत्री** परस्मिन्नात्मभावः । **दानं** स्वद्रव्यस्य परस्वत्वापादनम् ॥ (१३) **सान्त्वं** मधुरम् ॥ आदि० उत्तरयायाते[6] ॥ २ ॥

---

१ C पर्यगः पर्याप्तानि. २ C प्रहीणंमर्यादादानं ( for प्रहीणवल्लर्यादानं ). ३ Ed तितिक्षतः. ४ C om from अथवा up to तत्कार्याकरणमित्युक्तम्. ५ C अकर्म ( for अरुः मर्म ). ६ C आदि यायाते.



## [ ८३ ]

(३) **सदृशः**[1] तुल्यान् । **श्रेयसः** श्रेष्ठान् । **पापीयसः** पापतमान् ॥ (५) **प्रतिष्ठा** प्रकृष्टा स्थितिः ॥ (६) **सद्धर्मविधानगोप्ता** वेदरक्षकः ॥ (७) **उदीर्णः** उद्गतः ॥ (९) **धिष्ठितं**[2] लोकाद्विच्छिद्य स्थितम् ॥ (१०) **धृष्णवः**[3] प्रगल्भाः ॥ (११) **बलहा** इन्द्रः ॥ (१३) **आवपनं** बीजवपनम् ॥ आदि० उत्तरयायाते ॥ ३ ॥

## [ ८४ ]

(२) **वयः** कालसंबन्धः । **जन्म** जातिः ॥ (४–५) ययातिरष्टकवचनमङ्गीकृत्य स्वाभिप्राय एव पुरुषं पापेन पुण्येन च योजयतीति **प्रतिकूलं** इत्यादिना **जीवन्** इत्यन्तेन श्लोकद्वयेनाह ॥ (४) **प्रतिकूलं** इति । **कर्मणां** मध्ये **प्रतिकूलं कर्म पापमाहुः** इत्यन्वयः । प्रतिकूलत्वं च कर्मणः प्रतिकूलवेदनीयदुःखजनकत्वात् । **अप्रवणे** विरोधिनि । आत्मन इति विशेषः । **पापलोके**[4] पापलोको नरको यस्याः[5] । **सन्तो**[6] **नानुवर्तन्ति चैतद्यथा** तथा **एषां असतां**[7] **आत्मा** स्वभावः **अनुकूलवादी** इत्युपलक्षणम् । अनुकूलकारी च ॥ (५) **धनं** धनफलं सुखम् । **विपुलं** संख्यातः । **महत्** परिमाणात् । **अभूद्** इति लुङ् । तस्माद्दैवाधीनतामाह । **विशिष्टं चेष्टमानो** लब्धास्मि तत् ॥

(६–११) अभिप्रायस्य दैवाधीनत्वं न पुरुषाधीनत्वमिति[8] **नानाभावा** इत्यादिना **वर्जयाम्यप्रमत्त** इत्यन्तेनाह ॥ (६) **भावः** मतिर्वा इच्छा वा । **चेष्टा** पुरुषपरिस्पन्दः । **अधिकारः** कार्यकारित्वम् । तद् **नष्टं** येषु । **न विहन्येत** रागद्वेषाभ्यामात्मा न हन्तव्य इति शिक्षयति ॥ (१०) **प्रकृतिभजनं**[9] लयः ॥ (१२) **क्षेत्रज्ञः** परमात्मा ॥ (१८) दूरस्थितं प्रति **प्लुतप्रयोगः** ॥ (२१) **देशिकं** व्यपदेष्टारम्[10] । **अपाङ्गः** अन्तः ॥

---

१ C om from सदृशः up to बीजवपनम्. २ Ed विष्ठितं. ३ Ed धृष्णुमः. ४ Ed पापलोक्यम्. ५ C यस्य. ६ C om सन्तः. ७ B सत. ८ b om न पुरुषाधीनत्वम्. ९ Ed प्रकृतिं भजन्ते. C om from प्रकृतिभजनं up to प्लुतप्रयोगः. १० C देशिकं उपदेष्टारम्.

[ ८५ ]

(१) **कार्तयुगं** कृतयुगम् ॥ (२) स्वजनहितः **स्वजनीयः**[1] ॥ (४) **बलाशनाः** काकाः । **क्षीणे**[2] क्षयं गतेऽपि देहे । पुत्रपौत्रादिबहुप्रकारैः । **बहुधा** बहुप्रकारम् । यद्वा पतितदेहप्रभवबहुप्रकारकृमिरूपेण **वृद्धिं व्रजन्ति** । त एव हि स्वर्गच्युतास्तत्तत्प्रकारदुःखप्रददुष्कृतपरिपाकोपनीततत्तत्कृमिशरीरमधिष्ठाय युगपद्दुःखमनुभवन्तीति केचिदाचार्याः ॥ (५) **दुष्टं** दोषवत् । **गर्हणीयं** अदुष्टमपि गर्हितम् । यथा पितृभ्यो दत्तमदुष्टमपि कव्यं[3] गर्हयन्ति दाक्षिणात्याः ॥ (६) **कथं** किंप्रकाराः । **कथं** केन प्रकारेण । सुखेन दुःखादिकं । **आवहन्ति**[5] धारयन्ति । भूमेरिदं **भौमम्** । **नरकं** कथं व्रजन्ति । देशान्तरादिवत् देशान्तरं पद्भ्यां तत्र वा जन्म लभन्त इति वा प्रश्नार्थः ॥ (७) **ऊर्ध्वदेहाद्**[6] उत्सर्गदेहात्[7] । **कर्मणः** शुभाशुभात् । **जृम्भमाणाद्**[8] विकुर्वाणात् । आतिवाहिकं देहं प्रतिपद्य वियन्मार्गेण पतित्वा पृथिव्यां योनिजं देहमासाद्य **व्यक्तं** अस्मदादिदृश्यं[9] यथा भवति । **अनु** देहत्यागानन्तरं[10] **संचरन्ति**[11] । अयमेव भूमौ जन्मग्रहो **भौमनरक**गमनमित्युत्तरार्थः ॥ (८) पतद्भिरज्ञातं पतनकालं संख्यातुमाह **षष्टिं सहस्राणि** इति ॥ (९) **यतः**[12] यस्मात् **एनसः** पापात् । **कथंभूता** गृहीतातिवाहिकदेहा वा **गर्भभूता भवन्ति** इति प्रश्नार्थः ॥ (१०) **अस्रं** शोणितम् । **रेतः** शुक्रम् । तदेव यथासंख्यं **पुष्पं फलं** च । **अनु** विसर्गानन्तरम् । गच्छति प्रविशति इति यावत् ॥ (११) न केवलं जरायुजभावमापद्यते उद्भिज्जादिभावमपीत्याह **वनस्पतींश्च** । इत्युत्तरार्थः ॥ (१२) गर्भे च निवेश्यमानस्य **अन्यद्** आतिवाहिकं **वपुर्निदधाति**[13] निक्षिपति । गर्भे शुक्रशोणितपरिणामे **स्वेन कामेन** स्वेच्छया लिङ्गशरीरमेव **याति** ॥ (१३) **शरीरस्य देहनं** देहापचयैः[14] तस्य **अतिसमुच्छ्रयः**[15] ततोऽपि वृद्धिः । अथ वा **शरीरं** च **देहाति**-

१ Ed स्वजनो यः. २ Ed क्षीणा. ३ C द्रव्यं. ४ After this Mss. ins कर्मजाः योनिजाः. ५ Ed आभवन्ति. ६ Ed ऊर्ध्वं देहात्. ७ C अग्निदेहात् ( for उत्सर्गदेहात् ). ८ C दृश्यमाणात् ( for जृम्भमाणात् ). ९ C °दृष्टं. १० Mss अनुवाहिकदेहत्यागानन्तरं (?). ११ After this B ins अनु विसर्गानन्तरं पृक्तं संबद्धं अन्वेति आतिवाहिकदेहानन्तरं गच्छति प्रविशतीति यावत्. १२ Mss यतो. १३ Ed विदधाति ( for निदधाति ). १४ b स्नेह उपचयः (?) C देह उपचयः (?). १५ Ed °देहाद्रिसमुच्छ्रयः. C °समुच्चयः.



**समुच्छ्रयः** च । समाहारत्वादेकवचनम् । **संज्ञा** ज्ञानम् ॥ (१४) शुक्रशोणितपरस्परसंयोगक्रियाजनको **वायुः** । **समुत्कर्षति** अन्तर्भावे च कारितार्थस्तेनोत्कर्षयति वर्धयतीत्यर्थो गम्यते । **गर्भस्य** कुक्षिगतस्य शरीरस्य **योनिः** कारणं शुक्रशोणिते । **कृताधिकारः** कृतकार्यारम्भः । **क्रमेण** परिपाट्या । कारणस्य शुक्रशोणितस्य वृद्ध्या कार्यस्य गर्भस्य वृद्धिरित्यपौनरुक्त्यम् ॥ (१५) स शुक्रशोणितसंयोगाद् **जायमानः** शरीराकारेण प्रादुर्भवन् । **विशेषेण गृहीतमात्रो**[2] गृहीतेन्द्रियः । षड् बुद्धीन्द्रियमनोजन्येषु **ज्ञानेषु निष्ठा** तात्पर्यं[1] यस्य[3] ॥ (१६) **भावः** अभिप्रायो ज्ञानरागादिः । **उपचितिं** समृद्धिम् । **महान्** व्यापक **आत्मा** यस्य ॥ (१७) **संस्थितः** मृतः । **निघृष्यते**[4] अस्मादौ विना चैतन्येन । **आत्मना**[5] देहेन ।

भूतात्मा चेन्द्रियात्मा च य एकः पञ्चधा स्थितः ।

इति देहेऽप्यात्मशब्दप्रयोगात् । इति प्रश्नार्थः ॥ (१८) **निष्टनित्वा** कूजित्वा । **अनुसारी** पवनमनुसरणशीलः ॥ (१९) **विवक्षा** संदेहः ॥ (२२) तथा हि **तपः** स्वधर्मवृत्तित्वम् । **दानं** स्वद्रव्यस्य परस्वत्वापत्तिपर्यन्तो व्यापारः । अथ वा अभयदानम् । **यशः**[6] कृतव्याख्यानम् । **दमो** विषयात्प्रत्याहृतस्य मनसः तत्त्वे यथेष्टविनियोगयोग्यता । यथा दान्तो बलीवर्दो हलशकटादिवहनयोग्यः । **ह्रीः** अकार्यप्रवृत्तिनिरोधको मनोधर्मः । **आर्जवं** विहितेन पथा गमनम् । **अनुकम्पा** परदुःखप्रहाणेच्छा ॥ ( 861* ) **सप्त द्वाराणि** निमित्तानि निदर्शनानि उदाहरणानि च **स्वर्गस्य** । तथा हि यदि कश्चिज्जिज्ञासते कीदृशः स्वर्ग इति स तपःप्रभृतीनां यथोक्तलक्षणोदाहरणेन प्रबोधनीयः ॥ (२२) **मानेन** अहंकारेण । **पुंसः** पुमांसः ॥ (२३) **ब्रह्म** वेदः ॥ (२७) **मानसमार्गो**[7] ज्ञानं तेन **रुद्धं** आच्छादितम् । **तेजसः**[8] चैतन्यस्य ॥ आदि० उत्तरयायाते ॥ ४ ॥

[ ८६ ]

(१) **कथं** इति चरणविशेषणम् । आचार्ये गुरौ च कर्मेत्यनेन **आचार्य**-

१ b प्रतिपाद्य (?). २ Ed विगृहीतगात्रः. ३ Ed षड्ज्ञाननिष्ठायतनः ( for षड्ज्ञाननिष्ठः ). ४ B b निगृह्यते. ५ Ed आत्मानं. B b om आत्मना देहेन. ६ Ed शमः ( for यशः ). ७ Ed मानसमानभक्तं. ( for मानसमार्गरुद्धं ). C मार्गो अज्ञानं तेन. ८ Ed तैजसं.

कर्मा ब्रह्मचारी दर्शितः। यस्मिन्[1] परलोकमार्गे बहूनि साधनानि। शं[2] कल्याणं प्रति ॥ (२) अचोद्यो गुरुकर्मणि[3] अन्येनाप्रेर्यः ॥ (३) उपनिषद् रहस्यम्[4] ॥ (४) स्ववीर्यं[5] स्वप्रयत्नतः। न परेण कुण्डिका-दिकं[6] संग्राहयति इत्यर्थः। वृजिनं पापम् ॥ (५) विगृहो[7] विगतगृहः। लघुः अपरिच्छदः ॥ (६) रात्र्या इव रात्र्या ब्रह्मण्येकाग्रतया। यथा

या निशा सर्वभूतानां तस्यां जागर्ति संयमी।*

एकाग्रतया रात्रिस्तथा प्रवृत्तिहेतून् गुणान्दर्शयति। अभिजिता लोका अनव-लोकनेन निराकृताः। कामा विषयाः। सुखं वैषयिकम्। तामेव रात्रिं प्रयतेत तामेव रात्रिं उत्पादयितुं प्रयत्नवान् भवेदित्यर्थः ॥ (१२) अगोत्र-चरणः कुलशाखाव्यपदेशशून्यः। कौपीनं गुह्यमङ्गम् ॥ (१५) असितं अबद्धम्। सितकर्मस्थं शुक्लकर्मस्थं ॥ आदि० उत्तरयायाते ॥ ५ ॥

## [ ८७ ]

(१) अर्चिरादिमार्गगामित्वाद् यतीनां सूर्यः पितृयाणमार्गगामित्वात् वानप्रस्थानां चन्द्रो दृष्टान्तः ॥ (२) कामवृत्तेषु इच्छाचारिषु। संयतो विधिमाचरन् ॥ (३) अप्राप्य दीर्घमायुः मर्त्यत्वात्। प्राप्तो रोगादिभिः विकृतिं विपरीतानुष्ठानम् ॥ (४) न विद्यते अर्थे प्रयोजनं बुद्धिर्यस्य सः अनर्थबुद्धिः फलाभिसंधिरहित इत्यर्थः। अत एव धने सति तस्मिन् अस्वामी। सामर्थ्ये सत्यपि अनीशः[9] आग्रहाभावात्। आर्जवं विहितो मार्गः। समाधिः धर्मचिन्ता। आराद्दूरे याति गच्छति पापमस्माद् आर्यः। तस्य भावः आर्यम् ॥ (६) विप्रकीर्णो विक्षिप्तः। त्वरन्ति कारितलोपे त्वरयन्तीत्यर्थः। ब्रह्मणा[10] इति कर्तृविभक्तिश्रवणात्। स्थापिता इत्यध्याहृत्य लोकपाला इति संबन्ध-नीयम् ॥ (८) क्षेत्रज्ञं उत्पत्तिभूमिज्ञातारम् ॥ (१०) अमित्रान् शत्रून् दुःखं साहयति भोजयतीति अमित्रसाहः ॥ (११) अब्राह्मणो ब्राह्मणसदृशः

१ Ed अस्मिन्. २ Ed संमति (for शं प्रति). ३ Ed गुरुकर्मस्वचोद्यः (for गुरु-कर्मण्यचोद्यः). b अनोद्यः गुरुकर्मणि. ४ After this B b ins अथ वा उच्य (?) उपालभ्यः. ५ B b ग्रहणम्. ६ C स्ववीर्यं शुभशंसा.... ७ B C कल्कादिकं. ८ Ed नगृहः. ९ Ed अस्वोऽप्यनीशः (for अस्वाम्यनीशः). १० Ed ब्राह्मणा (for ब्रह्मणा).

* Bhagavadgita II, 69]



क्षत्रियादिः ॥ (१२) कृपणो दीनः। अब्राह्मणी[1] क्षत्रियाणी। जातु कदाचित्। दीना सती न जीवेद् इत्यन्वयः ॥ (१४) एकैकस्मिन् लोके आचन्द्रतारकं भोग्ये यदि सप्त सप्त दिनानि तिष्ठासि तथाप्यनन्तास्ते। मध्विव मधु च्योतन्तीति क्षरन्तीति मधुच्युतः[2]। घृतस्य बह्वयः कुल्याः[3] येषु। प्रति-पालयन्ति प्रतीक्षन्ते ॥ (१७) अपूर्वं विवृणोति न कृतं यदन्यैः इति ॥ उत्तरयायाते ॥ ६ ॥

## [ ८८ ]

(४) शिशोर्भावः शिशुकम्। अवधौ पञ्चमी शैशवमवधीकृत्य[4]। एवं कृते पापं किं नु स्यादिति शङ्कमानो विकल्पमानो न चैव कुर्यामकृतपूर्व-मन्यैः। तत्र तस्मिन्विषये। साधु शोभनम्। विधित्समानो[5] विधातुमिच्छन्। असाधुः अविवेकी भूत्वा किमिदं कुर्यामिति निषेधः। किं आक्षेपार्थत्वात् ॥ (७) परीप्समानान् याचमानान्। विद्युत इव रूपं रिपुभिर्दुर्निरीक्ष्यं येषाम्। स्वनवन्तः ख्यातिमन्त इति यावत्[6] ॥ (१३) विशिखा इव बाणा इव अतिवेगवत्त्वात्[7] ॥ (१९) ह्रीः एवाकार्यप्रवृत्तौ[8] निषेधो यस्य ॥ (२१) मामकेभ्यः आत्मीयेभ्यः। प्रकाशः प्रकटः ॥ (२२) प्रस्थः प्रस्थाख्यः मानविशेषः। बध्वा इव बध्वा सुखसाध्यां कृत्वेति यावत्। अथवा पक्षे (?) मार्गे तिष्ठतीति प्रस्थः। साधु बध्वेव बध्वा तद्वशीकृत्वेति यावत्। मेध्यान् यज्ञी-यान्। पुण्यं भाजयन्तीति पुण्यभाजः। मां पुण्यं प्रापयन्तीत्यर्थः ॥ (२३) अर्बुदं संख्याविशेषः ॥ उत्तरयायातं समाप्तम् ॥

## [ ८९ ]

(१६) विप्रतस्थे विशेषेण प्रकाशितमभूत् ॥ (२५) चितिः[9]। चयनम्। यूपं पशुबन्धनकाष्ठम् ॥ (३७) तं वसिष्ठम्[10] ॥ (३८) समा संवत्सरम्। अष्टमी अष्टानां पूरणी। उष्टं उषितवन्तं अष्टवर्षाणि स्थित-

१ Ed अब्राह्मणः. २ Mss मधुश्च्युतः. ३ Ed घृतपुत्रा (for घृतकुल्या). ४ b अवधौ पंचमी पैशाचमवधीकृत्य (corrupt). ५ Ed विवित्समानः. ६ After this C ins नाति-धृष्टोसि न मश... न श......मीति यावत्. ७ b अतिवेगवत्त्वात्. ८ b स्वकार्यप्रवृत्तौ (?). ९ Ed चैत्य°. १० C om तं वसिष्ठम्.

मिति यावत् । **ओम्** इत्यनुमतौ ॥ ( ३९ ) **विषाणभूतं** गोरिव प्रभूतम् ॥ ( ४० ) बलिं करं बिभ्रति धारयन्ति इति **बलिभृतः** ॥ ( ४६ ) **अन्ववायो** वंशः ॥ वंशानुकीर्तनं समाप्तम् ॥

[ ९० ]

( १ ) **उदारा** दातारः ॥ ( ३ ) **आजननं** वंशानुकीर्तनम् ॥ ( ५ ) **गुणाः** क्षमादयः । **प्रभावः** अचिन्त्या शक्तिः यथा वन्ध्याः अपि फलन्तिः तरवः । सत्यपि विघ्ने प्रारब्धकर्मापरित्यागो **वीर्यम्** । **ओजः** पराभिभवे सामर्थ्यम् । **सत्त्वं** रजस्तमोभ्यामनाच्छादितः सत्त्वगुणः । **उत्साहो** वीररसप्रकृतिरुद्योगविशेषः ॥ ( ११ ) **त्रीन् मेधान्**[1] मेधसंज्ञया यज्ञः प्रसिद्धः तेन त्रीन् यज्ञान् अश्वमेधपुरुषमेधगोमेधाख्यान् ॥ ( १२ ) **सूर्योदय** उदयपर्वतः॥ ( ३१ ) **भस्त्रा** चर्ममय आधारविशेषः । तेन **माता** धारयत्येव परं न पुत्रस्वामिनी । **पितुः पुत्र** इति षष्ठी पितृस्वामिकं पुत्रं दर्शयति । तत्र हेतुः **येन जातः स एव स** इति ॥ ( ३२ ) रेतः कायाकारेण परिणतं दधातीति **रेतोधाः** । ऊर्ध्वं देवलोकं नयतीति **उन्नयति** । **यमक्षयात्** यमगृहात् ॥ ( ३६ ) **मापयामास** मानं कृतवानित्यर्थः ॥ ( ४८ ) करस्पर्शमात्रेण सम्यक् नवां तनुं करोतीति **शंतनुः** ॥ ( ९६ ) वंशकीर्तनतात्पर्यार्थमाह **धन्य** इत्यादि । चतुःशास्त्रीयं **भारतं** नाम । तत्रार्थिनं प्रति अर्थशास्त्रमित्याह **धन्य** इति । धनमुत्पादयितुं साधु विहितोपायप्रकाशकत्वात् । धर्मार्थिनं प्रति धर्मशास्त्रमित्याह **पुण्य** इति । विहितानां पुण्यहेतूनां प्रकाशकः । काममोक्षलक्षणमुख्यपुरुषार्थहेतुत्वेन पुरुषार्थत्वेनोपचारितौ धर्मार्थौ तत्प्रतिपादकत्वाच्च धर्मशास्त्रमिदमिति । प्रतिपाद्यकाममोक्षोपायप्रतिपादकत्वेन काममोक्षशास्त्रमिदमित्याह **परमः पवित्र** इति । परमत्वं फलवत्त्वात् । द्वावपि हि काममोक्षौ प्रीतिरूपौ साधनापेक्षया परमौ पवित्रौ मुख्यव्यङ्ग्यत्वात् । एतावांस्तु विशेषः कामकार्यत्वात् देशकालस्वरूपैरवच्छिन्नः । मोक्षस्तु[2] कार्यत्वात्तैरनवच्छिन्नः । अतस्तत्प्रतिपादकत्वात् कामशास्त्रमिदम् । तत्र श्रवणाधिकारिणो निरूपयति **ब्राह्मणैः** इति । **नियमवद्भिः** शौच-

1 Ed त्रीन् अश्वमेधान्. C om from त्रीन् मेधान् up to आधारविशेषः 2 b मोक्षस्य°.



सन्तोषतपःस्वाध्यायेश्वरप्रणिधानवद्भिः । **शूद्रैः** तु **ब्राह्मणान्तरितं** यथा भवति तथा **श्रोतव्यम्** । ब्राह्मणं पुरस्कृत्य श्रोतव्यमित्यर्थः ॥ ( 909* ) **श्रावणे** तु ब्राह्मणस्यैवाधिकार इत्याह विशेषतः **श्रावयिष्यन्ति** इति ॥ **पुरुवंशानुकीर्तनम्** ॥

[ ९१ ]

( १ ) **इक्ष्वाकुवंशप्रभवो राजासीत्** इत्यादेः

(अ० ९४–९४ ) **स्वच्छन्दमरणं तस्मै ददौ तुष्टः स्वयं पिता**[1] ।

इत्यन्तं विशिष्टां पितृभक्तिं भक्तिफलं च प्रतिपादयति ॥ ( ६ ) **अपध्यातो** निन्दितः ॥ ( ८ ) **धैर्यं** रागादिभिरवसादप्राप्तस्य उत्तम्भनहेतुर्मनोधर्मः ॥ ( ९ ) **कश्मलो** मोहः ॥ ( १० ) **कच्चित्** कामप्रश्ने ॥ ( १८ ) **नचिरकालं यथा** भवति । **निष्कृतिः** उद्धारः ॥ ( २० ) **तुर्यस्य**[3] चतुर्थस्य **अर्धं** अष्टमो भागः ॥

[ ९२ ]

( ६ ) **असवर्णा**[4] असमानवर्णाम्[5] ॥ ( ७ ) **वक्तव्या** विषादयोग्या ॥ (८) निवर्तितमेव **निर्वृत्तं**[6] कारितलोपात् ॥ ( १४ ) **मीमांसेत** विचारयेत् ॥ ( १८ ) **शान्तस्य** उपशान्तमनसः उपशान्तान्तःकरणस्य वा[7] ॥ ( 930* ) **हावः** शृङ्गारजो भावः ॥ ( ४१ ) **लास्यं** सुकुमारं नृत्यम् ॥ ( ४८ ) **जीर्णः** हानिं गतः ॥ ( ५१ ) **धात्री** गर्भधारयित्री ॥ ( ५४ ) **आपवस्य** वसिष्ठस्य ॥ ( ५५ ) **पर्यायेण** समयक्रमेण **वासः** ॥

[ ९३ ]

( १५ ) **सु** शोभनं **आपीनं** ऊधो यस्याः । **वाला** धीयन्तेऽस्मिन्निति

1 Ed तुष्टः पिता स्वयम् ( for तुष्टः स्वयं पिता ). 2 After this C ins सृष्टः प्रसृष्टः. 3 Ed तुरीयार्धं ( for तुर्यस्यार्धं ). 4 B b सवर्णा समानवर्णा. 5 C वक्तव्यां उ(अ)पभोग्यास्पदाम्. 6 Ed मयातिवृत्तं ( for मया निवृत्तं ). 7 After this B b ins मन्त्रस्य ये व्यक्ताः प्रष्टव्याः वर्णमधुरम् ( corrupt ). C ins अनुयोक्तव्या वर्णं मधुरम्.

वालधिः पुच्छम् ॥ (३८) न प्रजास्यति न पुत्रभावेन जनयिष्यति ॥ (४६) द्युतिमान् कान्तिलक्षणगुणवान् । अथ वा द्युतिः आख्यातिः तद्वान् ख्यातिमानित्यर्थः ॥

[ ९४ ]

(४) कम्बुः शङ्खः[१] । कम्बुग्रीवेव ग्रीवा यस्य रेखात्रयशालिनी ॥ (७) भारतं भरतवंशप्रभवं प्रति विशेषेण गोप्तारम् ॥ (८) ब्रह्म ब्राह्मणः उत्तरं अधिकम् ॥ (१०) पुटभेदने पुरे[२] ॥ (१४) धर्मः च ब्रह्म च उत्तरे अधिके यत्र ॥ (१७) सत्यं श्रिता वागभवत् ॥ (२०) सुनिष्णातैः[३] सुशिक्षितः ॥ (४१) आनिर्देश्यं अशब्दगोचरम्[४] ॥ (५२) शरीरजेन अङ्गजेन कामेनेत्यर्थः ॥ (५६) मा माम् ॥ (६०) अग्निहोत्रादिरेको राशिः ऋग्वेदादिव परः । सन्तानः चापरः[५] । एषां त्रयाणां समाहारः त्रयी । त्रयीमध्यादपत्यं गुणैर्निर्धारयति पृथक्करोति सर्वाण्येतानि इति ॥ (६१) एतामेव त्रयीं स्तौति एषा त्रयी इति । पुराणानां ब्रह्मविष्णुमाहेश्वराणामेव । शाश्वती नित्या एषा त्रयी इत्यन्वयः ॥ (६६) अस्यां कन्यायां जातः पुत्रो राजा भवत्विति वरं प्रार्थना कन्यापितुः । कन्यामुद्दिश्य शशंस ॥ (७०) संबन्ध एव सांबन्धः[६] स्वार्थे तद्धितः ॥ (७१) आर्यस्य उपरिचरस्य । तेन उपरिचरन्[७] ॥ (७२) सत्यवतीं वोढुमर्हः उचितः[८] इत्यन्वयः ॥ (७७) तद्युक्तं[९] तस्मिन् युक्तम् ॥ (८२) कौमारिकाः कुमारसंबन्धिनः[१०] ॥ (९३) सर्वान् भीषयति इति भीष्मः ॥

[ ९५ ]

(१) ततो विवाहे निर्वृत्ते इत्यादिना

(१०) अन्ताय कृत्वा[११] गन्धर्वो दिवमाचक्रमे ततः ।

इत्यन्तेनातिशयस्याहंकारस्य फलमल्पायुस्त्वं असन्ततित्वं च दर्शयति ॥

(११) तस्मिन्नृपतिशार्दूले निहते भूरिवर्चसि ।

इत्यादिना

(अ०९६–५९) ऋत्विग्भिः सहितो भीष्मः सर्वैश्च कुरुपुङ्गवैः ।

इत्यन्तेन स्त्रियामतिव्यसनस्यानर्थहेतुत्वमाह ॥

[ ९६ ]

(३) वरं जामातरम् । स्वयं आत्मना वृण्वानां[१] वरयन्त्य इत्यन्वयः ॥ (१५) आमुञ्चतां बन्धताम् ॥ (१७) तात्कालिकः क्रोधः । कालान्तरावर्ती स एव अमर्षः ॥ (२६) जघने कव्याः पश्चाद्भागे ॥ आदि० विचित्रवीर्यविपत्तिः ॥[२]

[ ९७ ]

(१) ततः सत्यवती दीना कृपणा पुत्रगृद्धिनी[३] ।

इत्यादिना

(अ०१००–३०) जज्ञिरे देवगर्भाभाः कुमारा वंशवर्धनाः[४] ।

इत्यन्तेन सन्तानस्यावश्यकरणीयतामाह ॥ (१) दीना दुःखिनी क्षीणपुत्रत्वात् । कृपणा कृपापात्रं भर्तृपुत्रहीनत्वात्[५] ॥ (४) आयुः षाट्कौशिकलिङ्गशरीरस्थूलशरीरसंयोगावच्छिन्नः कालः ॥ (५) समासेन संक्षेपेण । व्यासेन विस्तरेण ॥ (११) मा निमज्जीः इति कारितलोपाद् मा निमज्जयेत्यर्थः ॥ (१४) शुल्कं मूल्यम् ॥ (१७) धूमकेतुः अग्निः ॥ (२४) मा नीनशः[६] मा नाशय ॥

[ ९८ ]

(५) लोकस्य[७] इति विभक्तिव्यत्ययात् लोकेन पुरोहितादिना । क्षत्रि-

१ b केतुः (?) शंखः. २ b om पुरे. ३ Ed स निष्णातः (for सुनिष्णातः). ४ After this b ins धरितार्थं (?). ५ Ed अग्निहोत्रं त्रयो वेदा यज्ञाश्च सहदक्षिणाः (for अग्निहोत्रं त्रयी विद्या संतानमपि चाक्षयम्). ६ Ed संबन्धकं. ७ C आर्यस्य उपचरितस्य (?) तेन उपरिचरणे. ८ B b वोढुमहसुचितः (?). ९ B b om तद्युक्तं. १० After this Mss ins अनेन दुष्करेण कर्मणा कस्य लोकान् ग्रहीष्यमीति. ११ B b अत्ययं नीत्वा (for अन्ताय कृत्वा)

१ Ed वृण्वतीः. २ After this B ins [२६] वाशिता हेतोः वाशितान्तरे घोरूपस्त्रीनिमित्तम् (?). b ins वासिताहेतोः वासितांतराणां रूपस्त्रीनिमित्तम्. ३ C प्राप्यगृद्धिनी. ४ Ed कुरुवंशविवर्धनाः (for कुमाराः वंशवर्धनाः). ५ C om from कृपणा upto °हीनत्वात्. ६ Ed व्यनीनशः. ७ Ed लोकेऽप्याचरितो वृत्तः (for लोकस्याचरितो धर्मः).

**याम्रु क्षत्रियाणां पुनर्भवः** पुनरुत्पादः । अयमेव **धर्म आचरितः । पाणिग्राहस्य** उद्वोढुः ॥ (७) **अन्वपद्यत** अनुगतवान् ॥ (८) अन्तः कुक्षौ वर्तते गर्भो यस्याः सा **अन्तर्वर्तिनी । अन्तर्वत्नी** इति वा पाठः । **आरम्यतां** विरम्यतामिति ॥ (११) **कामात्मानं** कामप्रचुरम् ॥ (१५) **दीर्घं तमः प्रवेक्ष्यसि** अन्धो भविष्यसीति ॥

**[ ९९ ]**

(३) **आसज्जमानया** ताल्वादिस्थानेष्वलङ्घ्या ॥ (१९) **अर्थमर्थानुबन्धं धर्मं धर्मानुबन्धं कामं कामानुबन्धं** इति सजातीयानुबन्धः । **विपरीतान्** विजातीयान् बन्धान् । अर्थो धर्मकामाभ्यां धर्मः कामार्थाभ्यां कामोऽर्थधर्माभ्यामनुबद्धः । **पृथग्** इति धर्मार्थकामाः प्रत्येकं केवला एवं ॥ (२३) **प्रस्नवः** स्नेहात्स्तन्यस्यन्दनम् ॥ (१५) **शाधि** शिक्षय ॥ (२९) **विधानविहितः** दैवविहितः । **स त्वं** भगवान् । **अवरजः** कनीयान् ॥ (३५) सजातीयपरापरोत्पादः **संततिः** । तत्रादिपुरुषः **कुलम्** । आभूतप्रादुर्भावः **प्रसवः** ॥

**[ १०० ]**

(४) **शरणं** गृहम् ॥ (५) **कृष्णस्य** व्यासस्य । **बभ्रूणि** कपिलानि ॥ (२६) **अभुजिष्या** दासी ॥ (1087*) **प्रलम्भः** प्रतारणम् ॥ आदि० धृतराष्ट्रादिकुमारोत्पत्तिः ॥

**[ १०१ ]**

(१) **किं कृतं कर्म धर्मेण येन शापमुपेयिवान् ।**

**इत्यादेः**

(२८) **दीर्घदर्शी शमपरः कुरूणां च हिते रतः ।**

१ Mss. पाणिग्रहस्य. २ Mss. अनुपद्यत (?). ३ Mss अन्तर्वर्ती (?). Ed अन्तर्वत्नी. ४ Ed संसज्जमानया. ५ Ed धर्मानुबन्धनं. B धर्मं धर्मादर्थमोक्षं. b धर्मं धर्मानुमोक्षं. ६ C om from विपरीतान् up to केवला एव. ७ After this B b ins विक्रंवल व्याचक्षाणाः (corrupt). ८ C स्नेहा (?) तेन स्पन्दनं. ९ Ed विधातृविहितः, C परिधानाविहितः (?). १० Ed शयनं. ११ C कृष्णस्य रामस्य.



इत्यन्तस्य स्वल्पेऽपराधे महान्तं दण्डं कुर्वतः पतनमिति तात्पर्यार्थः ॥ (४) लुप्यत इति **लोप्त्रं** चौरापहृतं द्रव्यम् ॥ (१६) **दोषत** इति द्वितीयार्यां तसिल् । **गमिष्यामि** इति कारितलोपात् । तेन दोषं गमयिष्यामि प्रापयिष्यामीत्यन्वयः ॥ (२१) **अणिः** शूलं तेन उपलक्षितो **माण्डव्यः** ॥ (२२) **उपालभत** दोषवत्तया उद्भावितवान् ॥ (२६) **आ** मर्यादायाम् । **आ चतुर्दश वर्षात्** चतुर्दशवर्षादूर्ध्वमित्यर्थः । **परेण** अन्येन चतुर्दशाधिकपर्यन्तमित्यर्थः ॥ आदि० धर्मशापः ॥ १०४ ॥

**[ १०२ ]**

(१) **तेषु त्रिषु कुमारेषु जातेषु** इत्यादेः

(२३) **करणत्वाच्च विदुरः पाण्डुस्त्वासीन्महीपतिः ।**

इत्यन्तस्य धर्मस्य विदुररूपेणावतीर्णस्य संनिधानाद् व्यासस्यामोघसंकल्पात् सत्यवतीभीष्मयोः परं शिष्टयोरनुग्रहात् कुमाराणामयस्कान्तमणेरिव लोभात्कर्षणं स तादृशप्रभावेण महामात्रेण त्रयमेवावर्ततेत्यादयो विभूतयो भवन्तीति तात्पर्यार्थः ॥ (२) **ऊर्ध्वं** प्रचुरं **सस्यं** यस्याम् ॥ (७) **धर्मोत्तरं** धर्मप्रधानम् ॥ (८) **निर्यूहो** निष्कृतं काष्ठम् ॥ (९) **पल्वलं** अल्पं सरः । **वप्रैः** केदारः ॥ (१२) **धर्मचक्रं** धर्मसमूहः ॥ (१६) **श्रमः** अस्त्रविद्याभ्यासः । **व्यायामो** नियुद्धाद्यभ्यासः ॥ (१७) **चर्म** फलकम् ॥ (२०) **परमं** पारम् ॥ (२१) **निर्वचनं** कीर्तनम् ॥ (२३) वैश्येन शूद्रायां जातः **करणः** । तेनात्र हीनजातिरुपलक्ष्यते । नन्वकरणो विदुरो ब्राह्मणाज्जातत्वात् ॥

**[ १०३ ]**

(१) **गुणैः समुदितं सम्यगिदं नः प्रथितं कुलं ।**

**इत्यादेः**

१ Ed आ चतुर्दशमाद्वर्षात्. २ Ed पाण्डुरासीत् ( for पाण्डुस्त्वासीत् ). ३ b स तादृशः प्रभावेण सत्तामात्रेण. ४ b निर्गतं. ५ Ed रम्य ( for वप्र ). C om वप्रः केदारः. ६ B न तु विदुरो करणो.

(अ० १०५–६) **पाण्डुं दृष्ट्वा नरव्याघ्रं व्यस्मयन्त[1] नरा भुवि ।**

इत्यन्तस्य कुलवृद्धिहेतुः सदारपरिग्रहस्तात्पर्यार्थः ॥ (१२) **दित्सितं** दातुमिष्टम् ॥ (१३) **बहुगुणं** उपर्युपरि कृतं बहुबन्धुम् ॥ (१४) **स्वसारं** भगिनीम् ॥

**[ १०४ ]**

(५) **निगूढनिश्चयं** अन्येनाज्ञातनिश्चयम् ॥ (६) **अभिचारः** आवाहनम्[2] ॥ (१०) **प्रकाशः** तमच्छेदः **कर्म** यस्य । **संबभूव**[3] संभवहेतुं संयोगं गतवान् कारणे कार्योपचारात् ॥ (१३) **गूहमाना** संवृण्वती । **अपचारं** अपराधम् ॥ (१६) **आपृष्ठतापात्** पृष्ठतापमवधीकृत्य । सवितुः पश्चिमदिग्गमनपर्यन्तमित्यर्थः ॥ (२१) कवचकर्तनात् **कर्णो वैकर्तनः** ॥

**[ १०५ ]**

(१) **धर्मेण आरामः** क्रीडनं यस्याः ॥ (४) **यात्वा** गत्वा ॥

(७) **कृतोद्वाहस्ततः पाण्डुर्बलोत्साहसमन्वितः ।**

इत्यादेः

(अ० १०६–६) **संप्रयुक्तश्च कुन्त्या च माद्या च भरतर्षभ ।**

इत्यन्तस्य धर्मदानधीरत्वं तात्पर्यार्थः ॥ (८) **आगस्कृतः** अपराधः कृतः[4] ॥

( Colophon ) **संभव** उत्पादः । तत्प्रतिपादकत्वात् ग्रन्थोऽपि **संभवः** ॥

**[ १०६ ]**

(६) **जिततन्द्रीस्तदा[5] पाण्डुर्बभूव वनगोचरः ।**

इत्यादेः

(अ० १०९–३१) **एवमुक्त्वा सुदुःखार्तो जीवितात्स व्ययुज्यत ।**

इत्यन्तस्य कामगणे मृगयायां अतिव्यसनफलं ब्रह्मशापाद्यन्तमनर्थजातं तात्पर्यार्थः । अत्रैव व्यसनप्रस्तावे व्यसनिनामवगणितानां दुर्योधनादीनां उत्पत्तिकथनमपि ॥

---

१ B b अस्मयन्त ( for व्यस्मयन्त ). २ After this Mss ins उभे द्वे. ३ Ed तस्यां गर्भं दधौ ततः ( for संबभूव तया सह ). ४ After this Mss ins सुह्मो ( B b शुक्को ) राजा पौण्ड्रौ षरेन्द्री. ५ B जिततन्द्री तदा. b जिततन्द्रीस्तथा.



(६) **तन्द्री** चेतनाभ्रंशः ॥ (१२) ब्राह्मणेन शूद्रायां जाता **पारशवी** ॥

**[ १०७ ]**

(१२) **मांसपेशी** मांसकोशः । **लोहाष्ठीलेव**[1] लोहमयी गण्डिकेव । **संहता** घना ॥ (१९) **अष्ठीला** गण्डिका ॥ (२८) **निधने** विरामे ॥ (३०) **करणः** कृतव्याख्यानः ॥

**[ १०९ ]**

(१) **आर्षः** आर्यः ॥ (९) **विरहिता अपि** रहिताऽपीति[2] । अकारालोपश्छान्दसः[3] । **बुद्ध्यङ्ग** इति पाठे तु बुद्धिरूपेणाङ्गेन रहितेत्यन्वयः । **नृशंसानि** हिंसाकर्माणि । **पापेष्वभिरत** इत्यत्राप्यनुवर्तनीयः ॥ (१०) **विधिं** प्राक्तनं कर्म । **प्रज्ञा न ग्रसते** नातिवर्तते । **विधिपर्यागतान्** विधिक्रमागतान् । **प्रज्ञा न प्रतिपद्यते** न विषयीकरोति ॥ (११) **कथं** इति किंवृत्तेन । कामलोभाभ्यामाभिभवो मतेश्चलनमाक्षिप्यते । स्त्रीविषयेच्छा **कामः** । तदितरविषयो[4] **लोभः** ॥ (१४) **सत्रं** द्वादश वर्षाणि(?) साध्यो[5] यज्ञः ॥ (१५) **प्रमाणेन** श्रुतिस्मृतिभ्यां[6] **दृष्टो धर्मः** तेन । **शप्तः**[7] हतः । **अभिचारेण** हिंसया ॥ (१६) **द्वौ निषेधौ**[8] विधौ पर्यवस्यतः ॥ (१७) **विवृतं** प्रकटम् । **च**कारादप्रकटमपि ॥ (१९) **पुरुषार्थः** कामः तस्य **फलं** सुखम् ॥ (२६) **व्यपत्रपन्** लज्जमानः ॥

(३१) **पाण्डुश्चापि हि[9] शोकार्तः क्षणेन समपद्यत ।**

इत्यादेः

(अ० ११०–२४) **पाण्डुः प्रव्रजितो वनान्[10]** इत्यन्तस्य ब्रह्मशापानिरस्तस्त्रीभोगेन पाण्डुना चतुर्थाश्रमं गन्तुमिच्छता प्रतिपादितास्तद्धर्माश्चेति तात्पर्यार्थः ॥

---

१ Mss. महाष्ठीलेव (?). २ Ed बुद्ध्यङ्गरहितापि च ( for बुद्ध्या विरहिता अपि ). ३ After this Mss ins अङ्ग इत्यामन्त्रणे. ४ B b तदितरः. ५ B C द्वादशवर्षादिसाध्यः. ६ Mss. प्रमाणं श्रुतिस्मृतिभ्यां. ७ Ed कथमस्मान्विगर्हसे ( for शप्तः कस्माद्विगर्हितः ). ८ Ed न रिपून्वै ( for नारिपून्वै ). B b नञौ. ९ Ed मृगः पाण्डुश्च ( for पाण्डुश्चापि हि ). १० Ed वनम् ( for वनान् ). b C वनात्.

## [ ११० ]

( १ ) **व्यतीतं** विनाशमाप्तम् । **पर्यदेवयद्** अशोचयत ॥ ( ३ ) **कामात्मा** कामप्रधानः ॥ ( ५ ) **देवैः** शास्त्रजनितबोधैः ॥ ( ६ ) **मोक्षो** बन्धनच्छेदः । **पितुः** व्याजिनः कृष्णद्वैपायनस्य ॥ ( ७ ) **एकः** असहायः । वसन्नित्यध्याहार्यम् । **मुनिः** मननपरः । **मुण्डः** सशिखमुण्डितमुण्डः ॥ ( ८ ) प्रवृत्तिनिवृत्ती विहाय मध्यस्थतामाश्रयितुं द्वन्द्वजातीयेभ्यो निवृत्तिं दर्शयति **त्यक्तसर्वप्रियाप्रियः** इति । **प्रियं** सुखसाधनं अङ्गरागादि[1] । **अप्रियं** दुःखसाधनं कण्टकादि । **त्यागः** तयोरुपादानहानबुद्धिशून्यावस्था ॥ (९) **शोके**[2]**ः** प्रियस्य नष्टस्य पुनः पुनर्बुद्धौ निवेशनम् । **हर्षः** सुखनिबन्धनो मनस उल्लासः । **निन्दा** सदसद्दोषाभिधानम् । **संस्तुतिः** सदसद्गुणकीर्तनम् । **आत्मा** इति द्वाभ्यां योजनीयम् । **तुल्यत्वं** ताभ्यां दुःखप्रीत्योरनुत्पादः । **निराशीः** स्वस्य परस्य वाखिलार्थनिर्गतेच्छः । यद्विधौ यन्निषेधो यन्निषेधे यद्विधिः ते द्वे । **द्वन्द्वं** सुखदुःखे शीतोष्णौ रागद्वेषावित्यादि । प्राणयात्रामात्रसाधनादन्यस्यापरिग्रहो **निष्परिग्रहता** । एतत्तु यमनियमयोरुपलक्षणम् ॥ ( १० ) **भृकुटिः**[3] ललाटत्वग्वह्रिवस्तु । सा च क्रोधस्योपलक्षणम् । **प्रसन्नवदनो** रागद्वेषाभ्यामनाविलमुखः ॥ ( ११ ) **अहिंसा**[4] हिंसाविरोधी प्रयत्नः । स च जात्यनवच्छिन्न इत्याह **जङ्गमाजङ्गमं सर्वं** इति । **चतुर्विधं** स्वेदजोद्भिजाण्डजजरायुजम् ॥ ( १२ ) **कुलानि** गृहाणि । **भैक्षस्य** भोजनोपायस्य **असंभवे अनशनानि** अभोजनानि । न सेवादिनोपायान्तरेण भुञ्जीतेत्यर्थः ॥ ( १३ ) पाणिपात्रमुदरपात्रं चेति पात्रद्वैविध्यात् पाणिपात्रपक्षमाश्रित्याह **अल्पमल्पं** इति वीप्सा । सप्तसु गृहेषु पाणिना पात्रेण **अल्पमल्पं** भुञ्जानः । **पूर्वलाभेन**[5] सप्तस्वपि लाभेनेति भावः । **जातु** कदाचिदिति कालविशेषः । पुरुषविशेषोपलक्षणार्थः तेन केचिन्मुनयः । उदरपात्रः उदरमेव पात्रं यस्य । पाण्यादिपात्रनिषेधार्थ उपचारः । तं प्रत्याह । अन्यान् सप्तानां मध्ये पूर्वस्मादपरान् विगच्छन् सप्तानां प्रथमे द्वितीयादौ वा लाभे सति अन्यानगच्छन्नित्यर्थः । **अलाभे सप्त पूरयन्** अष्टमं न गच्छे-

१ C स्रगादि. २ Ed न शोचन्न प्रहृष्यन्. ३ B b om from भृकुटिः up to °स्योपलक्षणम्. ४ Ed अविहिंसम्. ५ B b पूर्वालाभेन.



दित्यर्थः ॥ (1164*) **समदर्शी** मध्यस्थः[1] ॥ ( १४ ) **उक्षतः** सिञ्चतैः[2] । **कल्याणं** शुभम् । **अकल्याणं** अशुभम् ॥ ( १५ ) **जिजीविषुः** जीवितुमिच्छन् । **मुमूर्षुः** मर्तुमिच्छन् । यथा जीवमरणोपायमनुतिष्ठति न तथानुतिष्ठन् । तत्र हेतुः **मरणं** इति ॥ ( १६ ) **अभ्युदये** विहिताः **क्रियाः** । तिसृणां निषिद्धानामिष्टाणां[3] वा यादृच्छिकीनां चेच्छाद्वेषानिष्प्रयत्नसाध्या न कुर्वन्ति इत्याह **निमेषादिव्यवस्थितः**[4] इति । आदिशब्दादुन्मेषश्वासप्रश्वासादयः ॥ ( १७ ) **तासु** जीवयोनिप्रयत्नसाध्यासु **अवस्थासु**[5] सूक्ष्मावस्थासु । **तनुः** इति निरोधोपलक्षणार्थम् । निरुद्धसर्वेन्द्रियक्रियो[6] निरुद्धश्वासप्रश्वासादिरिति यावत् । **संपरित्यक्तौ धर्मात्मानौ** येन । **आत्मा** षाट्कौशिकः । **निर्णिक्तं**[7] शोधितम् ॥ ( १८ ) **वागुरा** बन्धनरज्जुः । वागुरेव **वागुरा** अविद्याकर्मादि । **मातरिश्वा** वायुः । तद्वदवश्यः ॥ ( २१ ) यो हि कामवृत्तिं त्यक्त्वा पुनराश्रयति **स शुनां वर्तते पथि** वांताशी भवतीत्यर्थः ॥ ( २३ ) वैश्येन शूद्रायां जातो यद्यपि **क्षत्ता** तथाप्यत्र हीनजात्युपलक्षणपरः ॥

**( २५ ) निशम्य वचनं भर्तुर्वनवासे धृतात्मनः ।**

इत्यादेः

**(अ० १११–११) अप्रजस्य महाभागा न द्वारं परिचक्षते[9] ।**

इत्यन्तस्य वानप्रस्थधर्मास्तात्पर्यार्थः ॥ ( २९ ) **स्वस्य** क्षत्रियस्य **वृत्तिं** क्रियाम् । **पितुः** विचित्रवीर्यस्य । अत एव **अन्ययाम्** । स्वधर्मत्यागस्य कस्यांचिदवस्थायां अदृष्टत्वात् ॥ ( ३१ ) **उपस्पृशन्** स्नानं कुर्वन् ॥ (३२) **पक्षो**[10] मित्रम् । **अपक्षो** रिपुः ॥ ( ३४ ) दृश्यतेऽनेनेति **दर्शनं** शास्त्रम् ॥ ( ३३ ) **विमृशन्** इति व्यवहितेनान्वयः ॥ ( ३४ ) **कुलं** गृहम् । एवं गृहवासिनां वानप्रस्थानामपि संनिधानात् । प्राप्तौ सत्यामपि **पुनर्ग्रामवासिनां** दूर-

१ After this C [ १४ ] वासी तक्षणं शस्त्रम्. B b वाशीतलक्षणं शास्त्रम् (corrupt). २ B b उक्षितः सिञ्चितः. ३ Mss. निषिद्धानां मिश्राणां (?). ४ Ed निमेषादिष्ववस्थितः. ५ B b अनवस्थासु. ६ Ed त्यक्तसर्वेंद्रियक्रियः (for तनुसर्वेंद्रिक्रियः). ७ B b निर्निक्तं. ८ After this B b ins अल्पयुक्तां व्यतिरिक्तां. C ins अन्यत्यक्तत्वे व्यतिरिक्तम्. ९ B b अप्रजस्य महाभागवद्वारं प्रतिचक्ष्यते. १० Ed पक्षापक्षेन (for पक्षापक्षेण).

स्थत्वेनाप्राप्त्यैव निराकृतत्वात् ॥ (३५) **समापनात्** पतनादवधेः[1] ॥ (३६) **निष्कं** ग्रैवेयकम् ॥ (३९) **अनुयात्राणि** सांघातिकबलानि ॥

[ १११ ]

(११) **स्वर्गे[2] तेनाभितप्तोऽहमप्रजस्तद्ब्रवीमि वाम्[3] ।**

इत्यादेः

(अ० ११५–२८) **सर्वे ववृधुरल्पेन कालेनाप्स्विव नीरजाः ।**

इत्यन्तस्य प्रसवसमाप्तिपर्यन्तस्य धर्मेणापद्धर्मेण वा पुत्रस्यावश्योत्पाद्यता तात्पर्यार्थः ॥ (२६) **प्रजनं** पुंशक्तिः ॥ (२८)* **स्वयंजातः[4]** आत्मना जातः औरसः । **प्रणीतः** क्षेत्रजः । **परिक्रीतो** धनेन स्वीकृतः । अन्यस्मै वाग्दत्ता अन्यस्मै प्रतिपादिता पुनर्भूः तस्यां जातः **पौनर्भवः** । **कानीनः** कन्यकासुतः । **स्वैरिणी** स्वेच्छाचारिणी तज्जः[5] ॥ (२९) **दत्तः** पितृभ्यां समर्पितः । **क्रीतः** परिवर्तगृहीतः । **कृत्रिमः** तव पुत्रोऽस्मीति स्वयमुपगच्छन् । **सहोढो** यस्य माता गर्भेण सहोढा । **ज्ञातिरेताः[6]** अपुत्रस्य भ्रात्रादिपुत्रः । **हीनयोनिधृतः** उत्तमेन पित्रा हीनायां स्त्रियां जनितः ॥ (३२) **सदृशः** तुल्यात् । **श्रेयस** उत्तमात् ॥

[ ११२ ]

(१४) **सोमसंस्था** यागविशेषः ॥ (२८) **दर्शयस्व** दर्शनेन संभावयस्व ॥

[ ११३ ]

(५) **कौमाराद्** ऊर्ध्वं यौवने प्राप्ते । **व्युच्चरमाणानां** तत्सूत्रं चरन्तीनाम् ॥ (३४) **अभिचारः** आवाहनम् ॥ (४३) **प्रदक्षिणं** आनुकूल्यं यथा भवति तथा वर्तितवती ॥

[ ११४ ]

(२) **बलिं** पूजाम् ॥ (३) **योगमूर्तिधरेण** इच्छाकायधरेण ॥

१ C अयनादवधेः. २ Mss स्वर्गतेना° (for स्वर्गे तेना°). ३ Ed वः. ४ Mss om जातः. ५ After this B b ins तया वा रिक्थहरा (?). ६ Ed जातरेताः (for ज्ञातिरेताः).

* For the types of sons mentioned here compare Manusmṛti IX, 166–178.



(४) **ऐन्द्रे** ज्येष्ठायाम् । **अभिजिते अष्टमे** मध्याह्ने ॥ (२६) **धाम** गृहम् ॥ (३१) **कुरुलक्ष्म** कुरुचिह्नम्[1] ॥ (६५) **चारिणी[2]** कुलटा । **बन्धकी** गणिका ॥

[ ११५ ]

(१) **रहः** एकान्ते ॥ (६) **स्तम्भो** वाक्स्तम्भः ॥ (७) **इष्टानिष्टविवक्षया** इष्टं वा अनिष्टं वा तवेति विवक्षया संशयेन ॥ (१४) **प्लवेन** उडुपेन ॥ (१८) **अत्यश्विनौ[3]** अतिक्रान्ताश्विनीकुमारौ ॥

[ ११६ ]

(१) **दर्शनीयांस्ततः पुत्रान् पाण्डुः पञ्च महावने ।**

इत्यादेः

(१२) **पाण्डुः परमधर्मात्मा युयुजे कालधर्मणा ।**

इत्यन्तस्य तीव्रतपस्तीर्थसेवाशिष्टसमागमादिभिरपि तीव्रसंवेगी ब्राह्मणशापो नातिक्रम्यत इति तात्पर्यार्थः ॥ (२) **मधुः** चैत्रः । **माधवो** वैशाखः ॥ (६) **वयःस्थां[4]** यौवनस्थां । **तनुवाससं** दृश्यसर्वावयवाम् । **गहने** वने ॥

(१३) **ततो माद्री समालिङ्ग्य राजानं गतचेतसम् ।**

इत्यादेः

(अ० ११९–५) **संमूढां दुःखशोकार्तां व्यासो मातरमब्रवीत् ।**

इत्यन्तस्य शिष्टोचितक्रियातात्पर्यार्थः[5] ॥ (१४) **तथागतो** यथा पुनस्तया मूर्त्या नायाति । अथवा कालधर्मेण गतः । अथवा यथैक आयातः **तथा** एको **गतः** ॥ (१८) **वनौकसो** मृगस्य दीनस्य ब्रह्मशापेन ॥ (२१) **मत्तो भाग्यतरा** मत्तः प्रकृष्टभाग्या ॥ (२२) **विलोक्यमानेन[6]** रूपेण । **वार्यमाणेन** वाचा क्रियया । **दिष्टं** भागधेयम् । **सत्यं** अवितथम् । **चिकीर्षुणा[7]** कर्तुमिच्छता ॥ (२३) **अभावात्[8]** निधनात् ॥ (२५) **अपलायिनं**

१ b om लक्ष्म कुरुचिह्नम्. २ C स्वैरिणी. ३ Ed एतावन्याश्रनानाति (for एतावत्यश्विनाविति). ४ C अवस्थां (?). ५ C शिष्टास्थितिक्रियातात्पर्यार्थः. ६ Ed विलोभ्यमानेन. C विनोद्यमानेन (?). ७ Mss om चिकीर्षुणा. ८ Ed भावांत् (for अभावात्).

संग्रामात् ॥ (२६) **कथमुच्छिद्यां** कथमुन्मूलयेयम् । **सत्यं** अवितथम् । अनुगमनेन **कामं**[1] मन्मथं संपादयामीत्यर्थः ॥ (२७) **वर्तयन्ती** पालयन्ती ॥ (२९) **सुप्रतिच्छन्नं** सुगुप्तम् । यथा न लज्जा भवेत् ॥

### [ ११७ ]

(१) अवभृथं इव **अवभृथम्** जीवनयज्ञांतम् ॥ (२) **शरणं** रक्षकम् ॥ (३) **उपनिधिं** निक्षेपम् ॥ (८) **वर्धमानपुरद्वारं** सिंहद्वारम् ॥ (९) **तां**[2] कुन्तीम्[3] । **चारणसहस्राणां** गायमानानाम्[4] । **मुनीनामागमनं श्रुत्वा** ॥ (१२) **व्यतिकरः** संहर्षः ॥ (२१) **दिव्येन हेतुना**[5] कुन्तीलब्धेन मन्त्रेण ॥ (२३) **महेष्वासान्** महाधनुष्कान् ॥ (३१) **पितृमेधं** वृषोत्सर्गादि ॥

### [ ११८ ]

(१२) **शुभ्राणि पाण्डुराणि** इति पर्यायाभ्यां पाण्डुरत्वोत्कर्षमाह ॥ (१३) **याजकैः**[6] वस्त्रविशेषैः ॥ (१५) **अपाहाय** त्यक्त्वा ॥ (१७) **न्यासयामासुः** स्थापयामासुः ॥ (१८) **कालीयकादिग्धं** कृष्णागुरुलिप्तम् ॥ (२२) **तुङ्गपद्मकौ** गन्धविशेषौ ॥ (२९) **शिश्यिरे** सुषुपुः ॥

### [ ११९ ]

(६) **अविक्रान्तसुखाः**[7] **कालाः प्रत्युपस्थितदारुणाः** ।

इत्यादेः

(४३) **उद्भावनमकुर्वन्तो विदुरस्य मते स्थिताः** ।

इत्यन्तस्य राजदोषात्कालो दुष्टः कालदोषाच्च सर्वाः क्रियाः मलिना प्रवर्तन्ते[8] इति तात्पर्यार्थः ॥ (६) **श्वः श्वः** प्रातः प्रातः । पापाय हिताः **पापीयाः** । **गतयौवना** सस्यानि न प्रसूयते ॥ (८) **योगः**[9] चित्तवृत्तिनिरोधः* ॥ (१३) **संस्कारान्** उपनयनादीन् ॥ (१५) **जवे** वेगे । **भोज्ये** भोजनशक्तौ ॥

१ C अनुगमनकाममुन्मुखं (corrupt). २ Ed तं (for तां). ३ C गतां. ४ C देवगायनानाम्. ५ Mss विधिना (for हेतुना). ६ C सायकैः अस्त्रविशेषैः. ७ Ed अतिक्रान्तसुखाः (for अविक्रान्त°). ८ B b राजदोषात्सर्वक्रियाः मलिनार्थाः प्रवर्तन्ते. ९ Ed त्यागं for योगं).

*Pāt. Yogasūtra I. 2.



(१६) **काकनिलीयने** क्रीडाविशेषे ॥ (१७) **विगृह्णाति**[1] विग्रहेण व्याप्नोति ॥ (२२) **नियुद्धे** बाहुयुद्धे । **योग्यासु** शिक्षासु । **उत्तरं** अधिकम् ॥ (२७) **प्रसह्य**[2] हठात् ॥ (३०) **प्रमाणकोट्यां** गङ्गातीरविशेषे ॥ (३८) **अपहस्तेन** पश्चात्तलप्रहारेण ॥ (३९) **संभृतं**[3] निविष्टम् ॥ (४०) **वेश्यापुत्रः** युयुत्सुः । **तद् अपि** विषमपि ॥ (४१) **भीमसंहननं**[4] भीमकायम् । **भीं अजनयत्**[5] न पुनरमारयत् ॥

### [१२०]

(१) **कृपस्यापि महाब्रह्मन् संभवं वक्तुमर्हसि** ।

इत्यादेः

(अ०१२३–७८) **भविता त्वत्समो**[6] **नान्यः पुमान् लोके धनुर्धरः** ।

इत्यन्तस्य शस्त्रशिक्षाकामानां कुमाराणां कृते शस्त्राचार्ययोः कृपद्रोणयोरुत्पत्तिशस्त्रावाप्तिशस्त्रप्रयोगसंहारशिष्यपरीक्षानैपुणादीनि तात्पर्यार्थः ॥ (२) **शरद्वान्** इति नाम्ना । **गौतम** इति गोत्रेण ॥ (५) **तपःशस्त्राभ्यां संतापयामास** ॥ (१०) **अवतस्थे** अवज्ञाय स्थितः ॥ (१५) तेन प्रवृत्तः **धनुर्वेदस्यान्तो** निश्चयः तं **गच्छति** इति **धनुर्वेदान्तगः** । तस्य **तदपत्यं** इत्यन्वयः ॥ (१६) पुत्री पुत्रश्च **पुत्रौ** ॥ (२०) **युक्तं** प्रयुक्तं करयुक्तं यन्त्रयुक्तम् । अथवा अस्त्रं शस्त्रं अत्यस्त्रं परमास्त्रं चेति । अथवा आदानसन्धानविमोक्षसंहारा इति **चातुर्विध्यम्** ॥

### [ १२१ ]

(२) **अदेवो** देवान्यः । **सत्त्वः** शरीरी ॥ (३) **हविर्धाने** हविर्धाम्नि । **आप्लुतां** स्नाताम् ॥ (४) **द्रोणे** कलशे ॥ (१४) **अश्वस्य उच्चैःश्रवसः इव स्थाम** बलं यस्य ॥

१ Ed विसृद्नाति. २ C om from प्रसह्य up to पश्चात्तलप्रहारेण. ३ C संभृतं मेलितम्. B b संभृतं निविष्टम्. ४ Ed भीमसंहननः. ५ Ed भीमः अजरयत् (for भीं अजनयत्). ६ Mss मत्समः (?).

[१२२]

( २ ) **अकृता** असंस्कृता ॥ ( ३ ) **उदीर्णानां** उद्रिक्तानाम् । **श्रिया** शोभया ॥ ( ५ ) **अजरं** अविनश्वरम् ॥ ( ७ ) सखा पूर्वं यस्य तत् **सखिपूर्वम्** ॥ ( ९ ) **किमिष्यते** किमभिलष्यते ॥ ( १२ ) **वीटा** क्रीडनविशेषः ॥ ( १६ ) **ईषीकाः** वीरणशलाकाः ॥ ( २३ ) **सुसत्कृतं**[1] सुपूजितम् । **निष्णातं**[2] शिक्षितम् ॥ ( ४१ ) **कृतोपसदनः** कृताभिवादनः ॥

[१२३]

( १ ) **आतस्थे**[3] अनुष्ठितवान् । **योगं** एकाग्रताम् ॥ ( ४ ) **अस्यति**[4] अभ्यस्यति ॥ ( ५ ) **ज्या** मौर्वी । **तलः** प्रकोष्ठः ॥ ( १२ ) **महीमयं** मृण्मयम् ॥ ( ३९ ) **विगतज्वरो** विगतसंतापः ॥ ( ४२ ) **योगः** संहननम् ॥ ( ४३ ) **व्यस्त्रे**[5] विशिष्टास्त्रे । उपयोगः **प्रयोगः**[6] । **सौष्ठवं** स्थानसुष्ठुत्वम्[7] ॥ ( ४६ ) **भासो** गृध्रः ॥ ( ४९ ) **आङ्गिरसां वरो** द्रोणः ॥ ( ७१ ) **आवापैः** शरक्षेपैः ॥ ( ७६ ) **असामान्यं** असाधारणम् ॥ आदि० संभवः समाप्तः ॥

[१२४]

( १ ) **कृतास्त्रान्धार्तराष्ट्रांश्च पाण्डुपुत्रांश्च भारत ।**

इत्यादेः

( अ०१२७–२४ ) **युधिष्ठिरस्यापि तदाभवन्मतिः ।**[8]

**न कर्णतुल्योऽस्ति धनुर्धरः क्षितौ ॥**

इत्यन्तस्य कृतोपनयनानां क्षत्रियाणां धनुर्वेदग्रहणतदर्थानुष्ठानस्य धर्म्यत्वात् तत्र पाण्डवकौरवकुमाराणां कीदृक् कस्य कौशलमिति शस्त्रवृद्धेषु भीष्मादिषु परीक्षणव्याजेन शस्त्रविद्याभ्यासातिशयस्तात्पर्यार्थः ॥ ( ७ ) हे **क्षत्तः** हे विदुर ॥

---

१ B b सुसंस्कृतं. २ Ed निपुणं. ३ C om आतस्थे. ४ Ed अभ्यस्त ( for अस्यति ). ५ Ed अस्त्रे ( for व्यस्त्रे ). ६ Ed अस्त्रोपदेशेषु ( for अस्त्रप्रयोगेषु ). ७ B b स्थानं सुष्ठु कुर्वता. After this B b ins साद्रीनां शुद्धिः (?). C ins दीनां शुद्धिः (?). ८ Ed अभवत्तदा मतिः.



( ८ ) प्रकाण्डरहित उद्भिज्जो **गुल्मः** । तद्रहिताम् । **उदक्**[1] उत्तरप्रवृत्तं पानीयं यत्र तद् **उदक्प्लवनं**[2] तत्र **संस्थिताम्** ॥ ( ९ ) **अवघुष्टं** शब्दितम् ॥ ( १८ ) **साङ्गारकः** सकुजः ॥ ( २६ ) **चुक्रुशुः** आह्वानं चक्रुः ॥ ( २७ ) **मार्गान्** कौशिकादीन् ॥ ( ३१ ) **वासितां**[3] करिणी ॥ ( ३२ ) **मण्डलानि** भ्रान्तोद्भ्रान्तानि ॥ ( ३३ ) **पाण्डवारणिः** पाण्डवानामेवाग्नीनामुत्पत्तिकाष्ठमिव[4] कुन्ती ॥

[१२५]

( ७ ) **ऐन्द्रिः** अर्जुनः । **इन्द्रानुजः** उपेन्द्रः ॥ ( १० ) **समुत्पिञ्जः** कलकलशब्दः व्याकुलता वा ॥ ( २२ ) **सुकुमारं** पुष्पादि । **सूक्ष्मं** बालाग्रादि । **गुरुं** अचलादि[5] ॥ ( २५ ) **दर्शनानि** आगमान् ॥ ( २६ ) **समाप्तभूयिष्ठे** ईषद् परिसमाप्ते ॥ ( २७ ) **वज्रनिष्पेषो** वज्रध्वनिः ॥ ( ३० ) **सावित्रेण** हस्तादिना **पञ्चतारेण** ॥

[१२६]

( ५ ) **सिंहस्येव संहननं** शरीरं यस्य ॥ ( ६ ) **नात्यादृतं** सावज्ञम् ॥ ( १० ) **क्षिप्तं**[6] आक्षिप्तम् ॥ ( १९ ) **वीर्यं** पराभिभवशक्तिः । तेन **श्रेष्ठः** उत्तमः । तत्र हेतुः **बलं धर्मोऽनुवर्तते** ॥ ( २० ) **किं क्षेपैः** वा कृतैः बलहीनस्य **आश्वाससदृशैः** ॥ ( २१ ) **त्वरयाश्लिष्टः** त्वरितः ॥ ( २३ ) **सविद्युतानि स्तनितानि इन्द्रधनुश्च**[7] **पुरोगमा**[8] येषाम् ॥ ( २५ ) **परिक्षिप्तः** परिवेष्टितः ॥ ( २७ ) **विज्ञातार्थौ** विज्ञाततत्त्वार्थौ ॥ ( २९ ) कर्णार्जुनौ मत्पुत्रौ एव । **दंशितौ** संनद्धौ ॥ ( ३४ ) **योनिः** कारणम् । **तत्कुलीनः** तेषां राज्ञां कुले भवन् । **प्रकर्षति** आज्ञापयति ॥ ( ३७ ) **वृषः** श्रेष्ठः ॥

[१२७]

( १ ) **यष्टिप्राणो** यष्टिरेव प्राणः शक्तिर्यस्य ॥ ( ३ ) **परिपूर्णार्थं**

---

१ C om from उदक् up to शब्दितम्. २ Ed उदकप्रवण°. ३ Ed वाशिता. ४ C °मुत्पत्तिस्थानमिव. ५ B b om गुरुं अचलादि. ६ Ed क्षिप्तं ( for क्षिप्तं ). ७ Mss सेन्द्रः धनुषः (?). Ed सेन्द्रायुध°. ८ Ed °पुरोजवैः ( for °पुरोगमैः ).

राज्यलाभात् ॥ (४) आर्तिविक्लवः[1] सशोकः ॥ (६) प्रतोदो लोह-मुखमश्वप्रेरणकाष्ठम् ॥ (११) प्रभवा उत्पत्तयः । दुर्विदा दुःखज्ञानाः । क्षत्रबन्धुना क्षत्राधमेन[2] ॥ (१४) आगमितम् ज्ञातम् ॥ (२४) निःश्रमः निःशेषितश्रमः ॥

[१२८]

(१) ततः शिष्यान्समाहूय[3] आचार्यार्थमचोदयत् ।

इत्यादेः

(१८) युधि निर्जित्य पार्थेन द्रोणाय प्रतिपादिता ।

इत्यन्तस्य तेजस्विनि प्रियमाचरति वाचापि नाप्रियमाचरेत् । अप्रिय-वाक्कर्मेन्धनसमुद्भूतः तेजोऽग्निः कालान्तरेणापि सानुबन्धं दहेदिति यथायमेव द्रोण-तेजोग्निः द्रुपदमिति तात्पर्यार्थः ॥ (१) आचार्यार्थं किं दक्षिणा इष्यते ॥ (1435*) किं इति प्रश्ने सोपहासमिव ॥ (१७) ब्राह्मेण[5] तपसा ॥ इयं चोपकथा प्राकरणिककथाया दृष्टान्तः ॥

[१२९]

(१) प्राणाधिकं[6] भीमसेनं कृतविद्यं धनंजयं ।

इत्यादेः

(अ० १३८–३१) पास्यन्तीमे जलं पश्चात्प्रतिबुद्धा जितक्लमाः ।

इत्यन्तस्य पाण्डवेषु महातेजस्विषु कौरवाणां वाचा कर्मणा च तेजोऽवधारणं द्रोणद्रुपदीयकथादृष्टान्तेन कदाचित्पाण्डवतेजोऽग्निः प्रज्वलिष्यति यत्र कौरवा होष्यन्त इति तात्पर्यार्थः ॥ (१५) दायाद्यं रिक्थम् ॥

[१३०]

(९) अर्थ एव वर्गः । गोहिरण्यवृक्षादीनां[7] भिन्नानामर्थत्वेनैकतापादनं वर्गः ॥

१ Ed स्नेहविक्लवः. २ B C क्षत्राद्धलेन (?). ३ Ed समानीय. ४ Mss. वृत्तं. ५ Ed ब्राह्मणेन. ६ C om from प्राणाधिकं up to °कथादृष्टान्तेन. ७ C गोहिरण्यभूम्यादीनां.



[१३१]

(३) समाजो मेलको यात्रा इति यावत् । पशुपतेः पशुपतिसंबन्धि ॥ (८) उत्सवं पशुपतियात्रालक्षणम् । अनुयान्तीति अनुयात्राः सेवकाः ॥ (१५) न प्रसहिष्यन्ते[1] न बाधिष्यन्ते ॥

[१३२]

(४) विश्वासेन भवति वैश्वासिकः ॥ (८) महाधनं महार्घम् ॥ (९) अग्नेर्हितं आग्नेयम् ॥ (१५) पर्ययः परिवर्तः ॥

[१३३]

(८) पापं कौरवद्रोहलक्षणम् ॥ (११) दिष्टभावं परलोकम् ॥ (१८) प्राज्ञः ऊहापोहसमर्थः । प्रलापज्ञः[2] प्रलापान् निरर्थकानि वचांसि अनेनाभिप्रायेण इमानीति जानन् ॥ (१९) अलोहं बुद्धिमयम् । निशितं तीक्ष्णम् । शस्त्रं हिंसकम् । शरीरपरिवर्तनं[3] इति शस्त्रत्वे हेतुः ॥ (२०) कक्षः तृणेन्धनसमुदायः तं हन्तीति कक्षघ्नः अग्निः । शिशिरघ्नः तुषारघ्नः स एव । महाकक्षे महावने । बिलौकसो[4] बिलवासिनः । न दहेद् इत्युक्तेन प्रकारेण । चशब्दो दृष्टान्ताय । यथा महावने प्रज्वलितोऽग्निर्बिलवासिनो न दहेत् तथा-प्यत्र गृहादावपि ज्वलन्नाग्निर्बिलसमाश्रयान्न दहतीति । संकेतेन युधिष्ठिरायात्मनः शरीरस्य रक्षोपायं कथयति ॥ (२१) अचक्षुः अप्रज्ञावान् । एवंविधो यद्वि-मोक्षणमार्गं न वेत्ति[5] । अधृतिः उत्सुकः । तस्मादस्मिन् समये भवद्भिरपुष्टबलै-र्युद्धाय नोद्योगः कार्यः ॥ (२२) अनाप्तैः अहितैः । दत्तं अग्निविषादिकम् । शस्त्रं हिंसकम् । अलोहजं बुद्धिजम् । तदेव आदत्ते गृह्णाति । स प्रमुच्येत तस्मात् शस्त्रात् । अत्र दृष्टान्तः ।

१ Ed प्रसहिष्यन्ति. २ Mss om प्रलापज्ञः. Mss read प्रज्ञया कृतान् प्रलापकान् (?). ३ Ed °परिकर्तनं. ४ b वनौकसः. ५ After this Mss ins अस्यामापदि विदितरूपो येन मार्गेण गमिष्यति तेन (?) उपायान्तरावपि (?) वधमासादयिष्यति । तदा दिग्वदनमपि नास्ति तस्यां दिशि गन्तव्यम् । यस्यां हि परो न जानन्ति । ज्ञात्वा यथोपायान्तरेण हन्तुं नोद्योगं कुर्वन्ति इति यावत् ।

**श्वाविच्छललमासाद्य प्रमुच्येत हुताशनात् ।**

इति[1] । श्वानं विध्यतीति **श्वावित्** शल्लकी । **शललं**[2] कण्टकरूपं स्वीयं लोम । **आसाद्य** आसमन्तात् गमयित्वा गात्रविधूननेन दिक्षु पातयित्वेत्यर्थः । स हि शुनो भिया पलायमानः कण्टकरूपैः लोमभिः विध्यन् मुच्यते । **हुताशनात्** हूयत इति हुतं मांसं तदश्नातीति **हुताशनः** श्वा तस्मात् । अयमभिप्रायः । यथा स्वेनोपायेन कौरवास्त्वां वञ्चयितुमिच्छन्ति तथा स्वेनोपायेन बिलेन तांस्त्वं वञ्चयेति ॥ (२३) **आत्मना** षष्ठेन सह । **आत्मनः**[3] आत्मसंबन्धिनः । **पञ्च** चतुरो भ्रातॄन् पञ्चमीं मातरम् । **पीडयन्** परिमितबिलप्रवेशेन[4] संकोचयन् । **नानुपीड्यते** न पश्चाच्छत्रुभिः संकोच्यते दग्धा इति ज्ञानात् । अथवा **आत्मना** देहेन । एकवचनात् एकेन । **आत्मनः** देहान् **पञ्चसंख्याकान्** । अत्र निषादीपुत्रदेहेषु पञ्चसंख्या निषादीदेहे च एकसंख्या । **पीडयन्** हिंसयन् । **अनु** तद्दाहानन्तरम् । पाण्डवा एव मात्रा सह दग्धा इति प्रतीतेः शत्रुभिर्धार्तराष्ट्रैर्न **पीड्यते** भवानिति संकेतः । अथवा **आत्मनः** मनसा सह **आत्मन** इन्द्रियाणि **पीडयन्** नियमनात् । शेषं पूर्ववत् । भोगलोभं विहायाज्ञानचर्यायां दुःखमप्यनुभूय स्थातव्यमिति संकेतः ॥ (२०) **कक्षघ्नः** इत्यत्र बिलप्रवेशेनात्मानं रक्षेदिति संकेतः ॥ (२१) **नाचक्षुः**[5] इत्यत्र परेण विहितो निःसरेत् । उपायान्तरेणापि वधस्य संभाव्यमानत्वात् । **धृतिः** इत्यत्र न साहसे चरः संग्राममारभेत् । हीनबलतया परिभवसंभवादिति संकेतः ॥ (२२) **अनाप्तैः** इत्यत्र परेण प्रयुक्ते बुद्धिमये शस्त्रे बुद्धिमयेनैव शस्त्रेण प्रतिकर्तव्यमिति संकेतः ॥ (२४) **अनुशिष्य**[6] अनुशासनं कृत्वा ॥ (२६) **अब्रुवन्** इति पाठे[7] प्रलपन्नित्यर्थः । अथवा **ब्रुवन्**[8] वक्रान् वाग्जालप्रयोगान्[9] ॥

[१३४]

(११) **शिवाख्यं** शिव इति आख्या यस्य । **आशिवं** मरणहेतुत्वात् ।

१ B b om from श्वाविच्छ° up to इति. २ Ed शरणं (for शललं). ३ B om आत्मनः. C सहायेन. ४ C °प्रेरणेन. ५ C om from नाचक्षुः up to °कर्तव्यामिति संकेतः. ६ Ed अनुशिष्टा (for अनुशिष्य). ७ C om from पाठे up to वक्रान्. ८ b om ब्रुवन्. ९ C अवाचकप्रयोगान्.



(१४) **मुञ्जः** शरः उल्पः[1] ॥ (१५) **सुकृतं** सुष्ठुकृतम् । **विनीतैः** शिक्षितैः ॥ (१६) पारशवः उत्तमेन हीनस्त्रियां जातः **विदुरः** ॥ (१९) **यत्तैः**[2] सावधानैः । **प्रक्रियते** प्रकटीक्रियते । ज्ञातः परस्य पापोऽभिप्रायो येन वाग्रूपचक्षुरादिविकारेण स **आकारः** । तस्य अभावः । **निः** उपसर्गार्थः । **नष्टैः** अदृश्यैः । **इव**शब्दोऽवधारणे । अयमेव प्रकारः श्रेयानित्यभिप्रायः । **विचिन्वद्भिः** अनुसरद्भिः । गतिः गम्यतेऽनयेति **गतिं** पन्थानम्[3] । **ध्रुवां** ध्रुवविनाशप्रापिकाम्[4] ॥ (२०) **प्रसह्य** हठात् ॥ (२१) **उपाक्रोशो** लोकगर्हा ॥ (२२) **अपि च** पक्षान्तरे । अपि संभावनायाम् ॥ (२३) **स्पशैः** चारैः ॥ (२५) **इदं**[5] **पापं** अग्निगृहे मरणलक्षणम् ॥ (२७) **गूढः** छन्नः **उच्छ्वासो** येषाम् । उच्छ्वासशब्दमपि न करिष्यामः । अथवा **गूढोच्छ्वासो** गूढनिःसरणमार्गः[6] ॥

[१३५]

(६) म्लेच्छवाक् इव **म्लेच्छवाक्** अवाचकत्वात् । म्लेच्छ अव्यक्तायां वाचि । अवाचकत्वं च रूढिहीनत्वात् ॥ (८) **कवेः** विदुरस्य ॥ (१३) **वप्रान्ते** प्राकारपर्यन्ते । **निष्प्रतीकारं** अचिकित्सम् ॥ (१६) **परिखां नाम** परिखासंज्ञकं बिलं चकार ॥ (१८) **अशुभधीः** पापबुद्धिः ॥

[१३६]

(१) **परिसंवत्सरं** संवत्सरपर्यन्तम् ॥ (४) **द्रवामो** व्रजामः ॥ (६) **माधवीं** कुन्तीम् ॥ (९) **प्रवाते** प्रकृष्टे वाते । **तुमुले** महति ॥ (१२) **दिष्ट्या** कल्याणम् ॥ (१६) **उपरोधेन** यन्त्रणया । **साध्वसेन** भयेन ॥

[१३७]

(७) **व्यपोहमानाः** निर्वापयन्तः ॥ (८) **प्रत्यपिहितं** पुनः पिहितम् ॥ (१३) **कुल्यानि**[7] चैत्यानि ॥ (१६) **परं** मरणादन्यतमम्[8] ॥

१ B C शरवल(न)ज (?) उलपः. २ B b यत्नैः. ३ B b स्थानं (?). ४ C ध्रुवां विनाशप्रापिकां. ५ Ed इमं. ६ C गृहनिःसरण°. ७ C om from कुल्यानि up to ज्येष्ठः. ८ After this B b ins ततोशौवातः (?) अविचारः.

## [१३८]

( १ ) **शुक्लो**[1] ज्येष्ठः ॥ ( ५ ) **रोधस्सु** तीरेषु ॥ ( ११ ) **जलस्थायो** जलाशयः ॥ ( १३ ) **उत्तरीयेण** उपरिवस्त्रेण ॥ (१४) **गव्यूतिः** क्रोशयुगम् ॥ ( १९ ) **शेते** स्वपिति । **हा**[2] कष्टम् । **अतथोचिता** तथा प्रकारानुचिता ॥ **एकजः** चैत्यवृक्षः ॥

( ३१ ) **इति भीमो व्यवस्यैव जजागार स्वयं तदा ।**

इत्यादेः

( अ० १४२–३४ ) **प्रययुः पुरुषव्या[3]घ्रा हिडिम्बा चैव राक्षसी ।**

इत्यन्तस्य सर्वातिशायि भुजबलं भीमस्येति तात्पर्यार्थः ॥

## [१३९]

( ५ ) **स्नेहस्रवान्** लालाम् । **पर्येति** परिवर्तते ॥ ( ७ ) **धमनीं** शिराम् ॥ ( ८ ) **नुं**[4] वितर्के ॥ ( ९ ) **नौ**[5] आवयोः ॥ ( २५ ) **त्रास्ये** रक्षयिष्यामि ॥ ( २७ ) **प्रभवन्निव** इन्द्रियेषु प्रभवन्मुनिर्यथा तथाहम् ॥

## [१४०]

( २ ) **मेघसंघातवर्ष्मा** मेघसंघातोच्छ्रायः[6] ॥ ( ५ ) **श्रोणीं** कटिम् ॥ **अवदानं**[7] खण्डनम् ॥ ( १६ ) **उत्फाल्य** विस्तार्य ॥

## [१४१]

( ३ ) **परेण** कामेन । अपकारे कृते सति ॥ ( ५ ) मदर्थो **नियोगो मन्नियोगैः**[8] ॥ ( १३ ) **कत्थितेन** स्वगुणकीर्तनेन[9] ॥ ( १४ ) **आयत्तौ**[10] कृतपराक्रमौ ॥

---

1 Ed शुक्र°. 2 Ed हि (for हा). 3 After प्रययुः पुरु° C wrongly ins com. on Ed passage from [ १५२–९ ] प्रवृत्तिं वार्ता up to [ १५६–१ ] द्रौपदीपाणिग्रहणं. 4 Ed तु (for नु), 5 Ed ने. 6 Mss ins मेघसंघातवर्ष्मा मेघसंघातोच्छ्रायः at the beginning of Adh. [ १३९ ] instead of at the beginning of Adh. [ १४० ]. 7 C दावनं (for अवदानं). b om अवदानं. B om अवदानं खण्डनम्. 8 Ed त्वन्नियोगेन (for मन्नियोगेन). After this Mss ins काम (किम) द्वेषस्य (?). 9 After this Mss ins स्वभावेन मनासि (?). 10 Ed आसक्तौ. b थ्रियंतौ (?).



## [१४२]

( ९ ) **अपनेतुं** इतः स्थानाद् विजनं स्थानं नेतुम् ॥ ( २२ ) **पुरा** अग्रतः । **रौद्रे** रुद्रदैवते[1] ॥ ( २४ ) **गुणशताधिकं** वारशताधिकम्[2] । अथवा गुणानां सत्त्वरजस्तमसां शतं त्रिशती तदधिकम् ॥ ( २९ ) **दुन्दुभिः** भेरी ॥ ( ३० ) **योक्त्रयित्वा** बध्वा ॥ हिडिम्बवधः समाप्तः ॥

## [१४३]

( १ ) **स्मरन्ति वैरं रक्षांसि मायामाश्रित्य मोहिनीम् ।**

इत्यादेः

( ३८ ) **कर्णस्याप्रतिवीर्यस्य विनाशाय महात्मनः[3] ।**

इत्यन्तस्यावक्षितो धर्मः सद्बुद्धिदानेन सहायसंपादनेन च वक्ष्यति तदिदमावाल्यात् पाण्डुपुत्रैः पालितस्य धर्मस्य[4] फलमिति तात्पर्यार्थः ॥ ( १ ) **भ्रातृनिषेवितं पन्थानं** मरणम् ॥ ( २ ) **गुप्तिः** त्राणम् ॥ ( ८ ) **तदा**[5] तस्मिन् प्रथमदर्शनकाले । **क्रियां** संभोगम् । **प्रत्याख्याता**[6] तव पुत्रेण स्वपुत्रेण प्रेरणाद्वारेण **त्वया** वा ॥ ( १० ) **विश्रम्भं** विश्वासम् ॥ (१४) **आपत्सु** धर्मच्छिद्रेषु **यो धर्मं धारयते**[7] स **धर्मविदुत्तमः** ॥

( १५ ) **येन येनाचरेद्धर्मं[8] तस्मिन् गर्हा न विद्यते ।**

**येन** प्रकारेण प्रतिषिद्धेनापि । **आचरेद्धर्मं** प्राणस्थितिलक्षणम् । **गर्हा** तस्मिन्निन्दा न विधते ॥ ( ३३ ) विविधाः कचा दीप्तयो यस्य स **विकचः** ॥ ( ३४ ) **घट** चेष्टस्व यदिच्छसि तत्कुरुष्वेति भावः[9] । **भासा** दीप्त्या **ऊर्ध्वाः कचाः** केशाः यस्य । इतिशब्दो हेतौ । अथवा **घटभाषा** जलेन पूर्यमाणस्य घटस्य ध्वनिः । घटभाषेव भाषा वाणी यस्य । लुप्तमध्यपदो बहुव्रीहिः । **घटभाषः** च असौ **उत्कचः** च । इतिशब्दः उपदर्शने । क्वचित्[10] **घटो हास्योत्कच** इति वा पाठः । तत्र घट इव जृम्भते हास्यं यस्य स तथा पश्चात्कर्मधारयः ॥

---

1 After this B ins सन्ध्यामुखे. 2 B वारशतं. 3 B b om महात्मनः. 4 B b om धर्मस्य. 5 B b om तदा. 6 Mss प्रतिख्याता (for प्रत्याख्याता). 7 Ed धारयति. 8 B b om from तस्मिन् up to प्राणस्थितिलक्षणं गर्हा. 9 C °त्यभिप्रायः. 10 B b om from क्वचित् up to कर्मधारयः.

(३५) **ताननुरक्तः** इत्यन्वयः ॥ (३६) **संवाससमयः** स दिवा क्रीडित्वा निशि समर्पयिष्यामीतिरूपः । **जीर्णः** अतिक्रान्तः ॥

## [१४४]

(१) **ते वनेन वनं वीरा घ्नन्तो मृगगणान्बहून् ।**

इत्यादेः

(२०) **जगाम भगवान्व्यासो यथाकाममृषिः प्रभुः ।**

इत्यन्तस्य विहितेन वर्त्मना गच्छतां पाण्डवानां परमशिष्टानुमतिस्तात्पर्यार्थः ॥ (२) **अन्तरेण** मध्ये ॥ (४) **छन्देन** इच्छया ॥ (५) **ब्राह्मं वेदं** ऋग्वेदादिलक्षणम् ॥ (११) **अभ्याशे** समीपे ॥

## [१४५]

(१) **एकचक्रां गतास्ते तु कुन्तीपुत्रा महारथाः ।**

इत्यादेः

(अ० १५२–१९) **तदद्भुततमं दृष्ट्वा पार्थास्तत्रैव चावसन् ।**

इत्यन्तस्य ब्राह्मणरक्षणपुरःसरं लोककण्टकोद्धारस्तात्पर्यार्थः ॥ (१२) **वीतमन्यवो** वीतशोकाः ॥ (१८) **बद्धवत्सा सौरभी** धेनुर्यथा वत्सस्थानं गच्छति तथा **कुन्ती** अन्तःपुरमिव **अंतःपुरं** ब्राह्मणपत्नीं प्रति गता ॥ (१९) **विकृताननं** शोकविवर्णमुखम् ॥ (२०) **अनलसारं** असारमित्यर्थः ॥ (२१) **ज्वरः** तापः । **द्वन्द्वानि** सुखदुःखादीनि ॥ (२२) **एकात्मा** एकाकी ॥ (२३) **स च** मोक्षः । **नास्ति** न भवति । **कथंचन** कथमपि । न अस्माकं रागिणामिति यावत् ॥ (२५) **योगं** अष्टाङ्गम् । **न प्रपश्यामि** न जानामि । **प्रद्रवेयं** गच्छेयम् । **अनामयं** अनुपद्रवं स्थानम् । **न हि** इति पूर्वस्मादनुवर्तनीयम् ॥ (२६) **यतः ततः** यत्र तत्र । **न श्रुतं** अश्रुतवदुपेक्षितम् ॥ (३२) **मन्त्रवत्** मन्त्रसहितम् ॥ (३४) **व्यंजनं** श्मश्रु ॥

---

१ B om from संवास° up to अतिक्रान्तः. २ C ते वने न्यषसन्वीराः घ्नन्तः. ३ C जगाम तपसा ध्यात्वा. ४ B b कुन्तीसुताः. ५ Mss पश्यामि. ६ Ed प्राद्रवेयम्.



## [१४६]

(१) **वैद्यस्य** विद्यावेत्तुः ॥ (२२) **व्युष्टिः** फलम् ॥ (३१) मृतामपि **मां** प्राकृतं जीवनं **न तप्स्यति** । कारितलोपान्न तापयिष्यति । अपत्यादिना कृतार्थत्वात् ॥ (३३) **वेत्स्यसि** लप्स्यसे ॥ (३४) **पूर्वस्य** परिणेतुः ॥

## [१४७]

(१) **क्षमं** युक्तम् ॥ (४) **प्लववत्** प्लवनेनेति ॥ (१३) **मोक्षणं** बकात् ॥ (१५) **त्यक्तव्या** वरयापि ॥ (१८) **अमृते** मरणरहिते ॥ (1623*) **इतः** बकराक्षसात् । **प्रदाने** खण्डने सति ॥ (२१) **स्वसुः** भगिन्याः ॥

## [१४८]

(१) **कुतोमूलं** किंमूलं किंकारणमिति यावत् ॥ (७) **असुतरो** दुस्तरः ॥ (११) **कस्य वस्तव्याः** कस्य वासयितुं शक्याः ॥ (१४) **वारः** क्रमागतः कालः ॥ (१६) **असुतरः** दुस्तरः । असुभिस्तीर्यत इति वा ॥

## [१४९]

(६) **आत्मनः** इति ज्ञानमुपलक्षयति ॥ (९) **अभिसन्धिः** ज्ञानम् ॥

## [१५०]

(२) **आकारेण** मुखादिविकारेण ॥ (३) **कच्चित्** प्रश्ने ॥ (१५) **निर्व्यूढाः** स्कन्धेन निःसारिताः ॥ (२०) **अर्थः** प्रयोजनं कार्यम् ॥ (२५) **आशुतरा** शीघ्रतरा **प्रज्ञा** यस्य ॥ (२६) **आर्तस्य** भीतस्य । **अनुक्रोशः** कृपा ॥

---

१ Ed विमोक्षणं. २ Ed स्वसः (for स्वसुः). ३ Ed वक्तव्या. ४ b C om असुभिस्तीर्यत इति वा. ५ After this Mss ins गह्व(द)नं प्राप्य. ६ Ed प्रोवाच सुतरां प्राज्ञः (for प्रोवाचाशुतरप्रज्ञः).

[१५२]

( ७ ) **वेश्म** संवासस्थानम् ॥ ( ८ ) **काल्यं**[1] प्रातः ॥ ( ९ ) **प्रवृत्ति** वार्ता ॥ ( १२ ) **आगणयामासुः**[2] निश्चयं कर्तुमुद्यताः ॥

[१५३]

**( १ ) ते तथा पुरुषव्याघ्रा निहत्य बकराक्षसम् ।**

**इत्यादेः**

**( अ० १५५–५२ ) तथा तत्कृतवान्द्रोण आत्मकीर्त्यनुरक्षणात्[3] ।**

इत्यन्तस्य पाण्डवानां धर्मः त्रिवर्गसहायो द्रौपदीं द्रोणनिराकरणद्वारेण[4] कौरव-जयसहायं (?) धृष्टद्युम्नं चाद्राक्षीत् । तत्र दुर्योधनादिभिर्लोकद्वयाचरितं पापं सह-कारिकारणमिति । धार्तराष्ट्रकुलकालरात्रिं तां द्रौपदीं दुर्योधनोरुभङ्गमूलकारणतां च धृष्टद्युम्नो गमयिष्यतीति तात्पर्यार्थः ॥ ( २ ) **ब्रह्म** वेदः । स च द्विविधः ऋग्वेदादिः धनुर्वेदश्च । तत्र ऋग्वेदादिः **परं ब्रह्म** ॥

[१५४]

( २१ ) **छत्रवत्यां** अहिछत्रे ॥

[१५५]

( ५ ) कल्माषपादस्येयं भूमिः **कल्माषी**[5] ॥ ( ९ ) **उपह्वरे** एकान्ते ॥ ( १६ ) **असांप्रतं** अयुक्तम् । **विमार्गः**[6] विरुद्धो मार्गः । **संकरः** वृत्तिसंकरः । तयोः **आदाने** ग्रहणे । **कथं च** इत्याक्षेपे । **न** निषेधे ॥ ( १७ ) **विविनक्ति** विवेचयति ॥ ( १८ ) **अघृणी** बीभत्साशून्यः ॥ ( २० ) **जुगुप्समानो** निन्दन् वचसा । **मनसा** बुद्ध्या **विचिन्तयन्**[7] । वेत्ति तावदयमस्मत्समीहितप्रदं योगमिति[8] ॥ ( २५ ) **वेगेन** संस्कारेण ॥ ( २६ ) **आर्पितं**[9] अनुगृहीतेति ।

---

१ b C कल्यम्. २ Ed प्रगणयामासुः. ३ B b °कीर्त्यनुकारणात्. C °त्यनुरोधनात्. ४ C om °निराकरण°. ५ b काल्माषी. ६ Ed विमर्शं संकरादाने ( for विमार्गसंकरादाने ). ७ b वाचिन्तयन्. ८ After this C ins किमस्याचारपरिग्राह इति (?). B b ins किमन्याचारणयेति (?). ९ Ed अर्पितं.



**पृषती**[1] द्रुपदमहिषी ॥ ( ४९ ) **धृष्टत्वात्** धृतिहेतुत्वादिति[2] । **अतिधृष्टत्वाद्**[3] अतिप्रागल्भ्यात्[4] ॥ ( ५१ ) **उपाकरोत्** उपकृतवान् । मामयं हनिष्यतीति जानतोऽपि तथा प्रवृत्तिः ॥ (५२) **आत्मनः** क्षमाशालिता **कीर्त्यनुरक्षणम्** ॥

[१५६]

**( १ ) एतच्छ्रुत्वा तु कौन्तेयाः शल्यविद्धा इवाभवन् ।**

इत्यादेः

**( अ० १५७–१६ ) पार्थान्संमन्त्र्य कुन्तीं च प्रातिष्ठंश्च परंतपाः[5] ।**

इत्यन्तस्य पञ्चानां द्रौपदीपाणिग्रहणं लोकगर्हितत्वात् पाण्डवा न कुर्युरित्याशङ्क्य चन्द्रमौलिना स्थापितो धर्म इत्युपकथया तान् प्रत्याययितुं व्यासस्यागमनमिति तात्पर्यार्थः ॥ ( १ ) **शल्येन** इव शोकेन **विद्धाः** । **इव**शब्दो भिन्नक्रमः । अस्वे अनात्मनि शोकादौ तिष्ठन्तीति **अस्वस्थाः** ॥ ( ३ ) **चिररात्रं** चिरम् । **लब्धलक्ष्याः**[6] लब्धप्रयोजनाः ॥ ( ७ ) **ब्रह्मणे** ब्राह्मणाय हितो **ब्रह्मण्यः** ॥ ( ८ ) **न क्षमो** न युक्तः ॥ ( ११ ) **आमन्त्र्य** पृष्ट्वा ॥

[१५७]

( ६ ) **विलग्नमध्या** तनुमध्या ॥

[१५८]

**( १ ) ते प्रतस्थुः पुरस्कृत्य मातरं पुरुषर्षभाः[7] ।**

इत्यादेः

**( अ० १५९–२२ ) ब्राह्मणप्रमुखं राज्यं शक्यं पालयितुं चिरम् ।**

---

१ Ed मा त्वं विमोहि ( for पृषति मोहि ). २ After this B b ins अक्षरसाम्यादर्थ-साधर्म्ये (?) तथा अर्थान्तरप्रानिपात्तिनिगमः । धृकारसाधर्म्याद् धृतिहेतुत्वं गम्यते । C om the remaining com. on this Adh. ३ Ed अतिधृष्णुत्वात्. ४ After this B b ins इति व्याकरणव्युत्पातिः । अतिप्रागल्भ्यं च मर्थ ( corrupt ) कवचस्य समर्थ (?) स्योत्पत्तिः । धर्माद् द्युम्नत्वा ( ? वत्वा ) दित्यपि निगमः । धर्मार्थकामानां तु संभव उद्भवः अत्र द्युकारसाधर्म्यात्. ५ Ed पार्थानामन्त्र्य कुन्तीं च प्रातिष्ठत महातपाः. ६ Ed लब्धमैक्षाः. ७ b भरतर्षभाः.

इत्यन्तस्य पुरोहितहीनस्य भूभुजो दृष्टा शापादयः अदृष्टा ग्रहविनायकादयो विघ्ना प्रभवन्तीति पुरोहितः कर्तव्य इति तात्पर्यार्थः ॥ ( ४ ) **ईर्ष्यन्**[1] असहमानः ॥ ( ५ ) **आविष्टः** परवशीकृतः ॥ ( ७ ) **आगमे**[2] गतिछेदे अपगमे इति यावत् । **त्रुटिः**[3] निमेषः । निमेषद्वयं क्षणः* । क्षणाः षष्टिः घटिकाद्वयम् । **अशीतित्रुटिहीनं मुहूर्तं** सन्ध्या ॥ (८) **कर्मचारान्**[4] कर्मानुष्ठानानि ॥ (९) **उपक्रान्तान्**[5] समीपगतान् ॥ ( ११ ) **आरात्** दूरे ॥ ( १२ ) **वित्त** जानीत ॥ ( १३ ) **वाकां** वाकानाम्नीं नदीम् । **अनु** अनन्तरम् ॥ ( १४ ) **शकुना:**[6] पक्षिणः ॥ ( १५ ) **परिग्रहः** संबन्धः ॥ ( १६ ) **अवधृष्णवः**[7] अप्राणयन्तः ॥ ( १८ ) **एकवप्रा शुचिः आकाशगा गङ्गा अलकनन्दा** ॥ ( १९ ) **वैतरणी दुःपारा**[8] चेति स्थानभेदात् गङ्गानामानि ॥ ( २० ) **असंबाधा** असंकटा ॥ ( २३ ) **चर्म** फलकम् । **अपोवाहं**[9] निवारितवान् ॥ ( २५ ) **अति गन्धर्वान्** गन्धर्वाधिकान् ॥ ( २७ ) **आग्निवेश्यः** परशुरामः ॥ ( ३० ) **भ्रातॄन् प्रति** यत्रास्य भ्रातरस्तत्राकृष्टवान् ॥ ( ३३ ) **स्त्री** नाथ इव **नाथो** रक्षको यस्य ॥ ( ३४ ) **अङ्ग** इति संबोधने ॥ (३६) **साधु** इत्युपालम्भे । **इमं लाभं** परिभवाख्यं[10] आगच्छत्यस्मादिति ॥ ( ४१ ) **आगमो** गुरुपरंपरा ॥ ( ४३ ) **समानपद्ये** तपःस्थानके समीकृतपदद्वये । **अनुनेष्यामि** त्वां प्रापयिष्यामि ॥ ( ४४ ) **नृभ्यः** पुरुषेभ्यः । **विशेषिताः** विशेषाः । सार्वविभक्तिकस्तसिल् । **देवानां अविशिष्टः** समः । **अनुभावः** प्रभावः । **प्रवर्तिताः** भविष्यन्ति ॥ ( ४६ ) **रंहसः** वेगान् ॥ ( ४८ ) **साधनं** हस्त्यश्वादि ॥ ( ५० ) **रथस्य अङ्गं** अश्वम् । **वडवा** घोटिका । **मताः** श्लाघ्याः ॥ ( ५१ ) **गन्धर्वजा** गन्धर्वलोकजाः ॥ ( ५३ ) **संभोगः**[11] परस्परोपकारः ॥

## [१५९]

( १ ) **यान्तो** गच्छन्तः । **ब्रह्मविदो** वेदविदः ॥ ( १० ) **बाहुद्रविणं** बाहुबलम् ॥ ( ११ ) **मन्युः** क्रोधः ॥ ( १२ ) **संख्ये** संग्रामे । **तापत्यवर्धन** इति अर्जुनामन्त्रणे ॥ ( १५ ) **पुरोहितः**[1] एव **धूः** अग्रणीः तस्मिन् अथ वा **पुरोहितस्य धूः** चिन्ता तां **गतः** ॥ ( १७ ) **शुचयः** सङ्गवर्जिताः ॥ ( २० ) **मेरुः** चासौ **धरः** पर्वतो **मेरुधरः**[2] ॥

## [१६०]

( १ ) **तापत्य इति यद्वाक्यमुक्तवानसि मामिह ।**

इत्यादेः

( अ० **१६३**–२३ ) **तपत्यां तपतां श्रेष्ठ तापत्यस्त्वं ततोऽर्जुन ।**

इत्यन्तस्य सति पुरोहिते अतिदूरे विघ्नाः । ये मनसाभिलष्यन्ते पुरुषार्थास्ते हस्तगताः स्युर्यथा संवरणस्य वसिष्ठप्रसादात् तपतीं प्राप्तिरिति तात्पर्यार्थः ॥ ( ५ ) **त्रिः**[3] त्रीन् वारान् ॥ ( ६ ) **धिष्ण्येन** दिव्येन ॥ ( ७ ) **सावित्र्यवरजा** सावित्रीकनीयसी ॥ ( १० ) तर्कयामास **मेने** ॥ ( २६ ) **स्वसितलोचना** शोभने असिते लोचने यस्याः । **गिरिप्रस्थे** गिरिसानौ । **क्षुपो** विटपः ॥ ( 1723* ) तपत्या **कान्त्या** ॥ ( 1724* ) **हिरण्मयैः**[4] सुवर्णमय इति ॥ ( २७ ) **अवमेने** अवज्ञातवान् ॥ ( ३० ) **आविष्कृतं** प्रकटीकृतम् ॥ ( ३१ ) **द्रविणस्य** अलंकारस्य **संपदा** ॥ ( ३४ ) **रम्भा** कदली ॥ ( ३६ ) **भोगवती**[5] भोगः फणा तद्वती ॥ ( ४० ) **अन्विच्छन्** अनुसरन् ॥

## [१६१]

( ४ ) **आविष्कृतं**[6] उद्धूतम् ॥ ( ६ ) **संदिग्धाक्षरया** अस्फुटाक्षरया ॥ ( ९ ) **अनाक्रन्दे** शोकशून्ये ॥ ( ७ ) **असितापाङ्गि** इत्यादीनि भूयोभूयस्तपत्याः संबोधनानि राज्ञः तस्य मन्मथकृतानि चाटूनि रागमुदारमवश्यमुदत्पादयन्ति ॥

## [१६२]

( २ ) **अनुयात्रं** अनुयायि बलम् ॥ ( ६ ) **कल्याणी** सदया इति

---

(p. 78) १ ईर्ष्युः. २ Ed °गमेषु ( for °गमे तु ). ३ Ed त्रुट ( for त्रुटि ). ४ Ed कामचारम्. ५ Ed उपक्रान्ता. ६ Ed कुणपाः. ७ Ed अवघृष्णुमः. ८ Ed दुस्तरा. ९ Ed व्यपोवाह. १० C om परिभवाख्यं. ११ Ed संयोगः.

*क्षण usually = 4 त्रुटि.



(p. 79) १ C om from पुरोहितः up to अथ वा. २ Ed मेरुवर. ३ Ed यद्वचः (for त्रिर्वचः). ४ Ed हिरण्मयी. ५ B b om भोगवती. ६ Ed आविष्कृतः.

**मधुरा** ॥ (७) **शात्रवाणां** शत्रुसंघानाम् ॥ (१४) **दिव्येन विधिना** योगबलेन ॥

## [१६३]

(४) **अपवर्जनात् अन्यत्र किम्** ॥ (६) **विसृष्टो** विसर्जितः ॥ (८) **कृच्छ्रे** क्लेशावहे । प्रायश्चित्ते **द्वादशरात्रसमाख्ये** । **समाहिते** समाप्ते ॥ (१६) **श्यावभूतैः** कृष्णैः ॥ (१८) **द्वादशीः समाः** द्वादश वर्षाणि ॥ (२२) **पौर्विकां** पूर्वभर्वा । **वैवस्वती** विवस्वत्सुतां ॥

## [१६४]

(१) **स गन्धर्ववचः श्रुत्वा तत्तदा भरतर्षभ ।**

इत्यादेः

(१४) **तस्मात्पुरोहितः कश्चिद्गुणवानस्तु वो द्विजः ।**

इत्यन्तस्य समस्तगुणसंपन्नः पुरोहितः कार्यः इति तात्पर्यार्थः ॥ (५) **संववाहतुः** मर्दितवन्तौ ॥ (८) **आहर्तुं** आनेतुम् । **यमक्षयात्** यमगृहात् ॥ (९) **विश्रुतात्मानं** ख्यातम् ॥ (१४) **ब्रह्म** ब्राह्मणः । अथवा **ब्रह्मणः कार्यं ब्रह्मकार्यं** उत्पत्तिः सैव **पुरःसरी** यस्य तत्तथा ॥

## [१६५]

(१) **किं निमित्तमभूद्युद्धं विश्वामित्रवासिष्ठयोः ।**

इत्यादेः

(अ० १६८–२५) **अश्मको नाम राजर्षिः पार्थनं यो न्यवेशयत् ।**

इत्यन्तस्य क्षत्रात्तेजसो ब्राह्मं तेजो बलवत् तच्च क्षमया रक्षितं तस्मात् क्षमावन्तं तेजस्विनं ब्राह्मणं क्षत्रतेजोरक्षायै पुरोहितं कुर्यादित्यर्थः ॥ (५) **मरु** निर्जलो देशः स एव **धन्वा** निर्वृक्षत्वात् ॥ (८) **वन्येन** नीवारादिना ॥

१ Ed समापिते. २ Ed शवभूतैः. ३ Ed पौर्विकी. ४ C पूर्वतरा. ५ C सूर्यसुता. ६ Ed विजितात्मानं. ७ Ed वैरं (for युद्धं). ८ Ed पोतनं. C पारेवं (?).



**रसायनं रसानां** षण्णां **अयनं** स्थानम् ॥ (१३) **पद्मायतां** शृङ्गपुच्छसक्थिस्तनशिरोग्रीवासु आयतां दीर्घाम् । **पृथुभिः पञ्चभिः** उरः पृष्ठशिरः कुक्षिश्रोणीभिः **समावृतां** परिवेष्टिताम् । **मण्डूकस्य** इव उन्नते **नेत्रे** यस्याः । **ऊधः** पयोधरमण्डलम् ॥ (१४) **वालधिः** पुच्छम् । **शङ्कुकर्णा** शङ्कुवत् सूक्ष्मौ कर्णौ यस्याः । **पुष्टायतशिरोग्रीवा पुष्टं** पीनं **आयतं** दीर्घं **शिरो ग्रीवा** यस्याः । आयतमिति पुनरुक्तिरर्थस्य पुष्टिमाह ॥ (१८) **वीर्ये** वीरस्य भावः ॥ (२२) **कशादण्डैः** चर्मयष्टिभिः । **हंभा** इति गवां ध्वनेरनुकरणम् ॥ (२४) **क्षमावान्** प्रतिकारबुद्धेरनुत्पादवान् ॥ (२६) **पाषाणदण्डाभिहतां** पाषाणैः दण्डैश्चाभिहताम् ॥ (२७) **न चुक्षुभे** न क्रुद्धवान् । धीरस्य भावो **धैर्यं** निर्विकारता ॥ (३१) **ऊर्ध्वाञ्चितं** उन्नमितम् ॥ (३३) **काल्यमाना** प्रेर्यमाणा ॥ (३५) **शकृतो** गोमयात् ॥ (३९) **ते** नन्दिनीसमुद्भूताः ॥ (४१) **निर्विण्णः** विरक्तः ॥ (४४) **विष्टभ्य** व्याप्य । **सुतं** पवित्रम् ॥

## [१६६]

(1777*) **याज्यः** शिष्यः तस्य **अर्थः** प्रयोजनं यागः ॥ (३) **एकायनगतः** एकरथगतः ॥ (४) **प्रतिमुखागतं** संमुखम् ॥ (६) **धर्मपथे** धर्ममार्गे । उत्तमानामधमं दृष्ट्वा मार्गात्यागस्य शिष्टाचारप्राप्तत्वात् । **मुनेर्मानात्** मुनेरहंकारात् राज्ञा समारोपितात् । **क्रोधाच्च स्वगतात्** ॥ (९) **पुरुषादः** राक्षसः ॥ (१०) **वीर्यं** तपसि प्रयत्नः तदेव **शक्तिः** यस्य ॥ (११) **याज्यो** यजमानः । **अन्वपद्यत** वसिष्ठं लक्षीकृत्य गतवान् ॥ (१२) **तयोः** शक्तिसौदासयोः । तौ शक्तिसौदासौ । **उपचक्रमे** उपक्रमं कृतवान् । शक्तिं प्रति राक्षसं प्रेरयितुम् ॥ (२१) मित्राणि सहते पालयति **मित्रसहः** । **आस्स्व** तिष्ठ ॥ (२४) **सूदं** सूपकारम् । **प्रतिश्रुतं** प्रतिज्ञातम् ॥ (२६) **व्यथान्वितः** मांसं नास्तीति दुःखितः ॥ (२८) **संस्थानं** गृहम् । **वध्यघातिनां** सापराधनरघातिनाम् ॥ (२९) **अपिहितं** पिहितम् ॥ (३०)

१ B पर्रं. b पलं (?). २ Ed त्रिपृथुं पञ्चसंवृतां (for पृथुपञ्चसमावृतां). ३ C om सूक्ष्मौ. ४ C विषिक्तः. ५ C अभिमुखागतं. ६ C om क्रोधाच्च स्वगतात्. ७ Mss अनुपद्यत (corrupt). ८ C दुःखान्वितः. ९ Ed उपहितं.

**सिद्धचक्षुषा** दिव्यज्ञानेन ॥ ( ३१ ) **लोलुपा** लम्पटत्वम् ॥ ( ३२ ) **सक्तः** आसक्तः ॥ ( ३३ ) **द्विरनुव्याहृतो**[1] द्विरुक्तः । शक्तिना[2] भोजनार्थिना विप्रेण च । **विसंज्ञो** विगतज्ञानः ॥ ( ३५ ) **त्वत्तः** त्वामेवाधिकृत्य ॥ ( ४३ ) **इद्ध्वा** प्रज्वाल्य ॥

[१६७]

( ११ ) **संगत्या** संनिधानेन ॥ ( १२ ) **अर्हं**[3] पूज्यम्[4] ॥

[१६८]

( १० ) **निदेशे**[5] आज्ञायाम्[6] ॥ ( १४ ) **पुरवरं**[7] नगरम् ॥

[१६९]

( १ ) **आश्रमस्था ततः पुत्रमदृश्यन्ती व्यजायत ।**

इत्यादेः

( अ० १७२–१७ ) **भक्षयन्दृश्यते वह्निः सदा पर्वणि पर्वणि ।**

इत्यन्तस्य क्षमासाराणां ब्राह्मणानां सर्वतेजसामुपरि वर्तमानं तेजः कुतोऽपि गुणदोषादुपचाराद्विकुर्वाणं त्रैलोक्यदहनक्षमं केनापि दुरुपसंहारं तैरेव स्वभावोन्मीलत्करुणरसैः पुनराश्रितमैत्रिकैः क्षमाप्रहरणैरुपसंहर्तुं शक्यते । तस्माद्वविर्ष्णुभिर्[8] ब्राह्मणा[9] माननीया इति तात्पर्यार्थः ॥ ( ३ ) **परासुः** गतासुरिव **गर्भस्थेन** एव जीविते **स्थापित** इति तस्य **पराशरसंज्ञा** ॥ ( ८ ) **आर्यः** पितामहः[10] ॥ ( ९ ) लोकन्ते[11] पश्यन्तीति **लोकाः** ॥ ( १२ ) अग्रे भुञ्जत इति **अग्रभुजः** ॥ ( १३ ) **तत्कुलेयानां** तत्कुले भवानाम् ॥ ( १४ ) **याचिष्णवः** याचनशीलाः ॥ ( १६ ) **कारणान्तरात्**[12] चिरजीवननिर्वेदात् ॥ ( २१ ) **मुष्णन्** खण्डयन् ॥

१ Ed °व्याहृते. २ Mss शक्ति (for शक्ति). ३ Ed अर्हं त्वदृश्यती (for अर्हाहमित्यदृश्यंती). ४ After this Mss ins स्रावं गर्भस्रावम्. ५ C निर्देशे. ६ B b आज्ञापालने. ७ b om पुरवरं. C पौदनं (?). ८ C तर्ष्णुभिः (?). ९ C om ब्राह्मणाः. १० After this Mss ins गृणन्ति हिंसन्तीनि सर्वा राक्षसाः त एव. ११ B b लोकान्. १२ Ed कारणान्तरदर्शनात्.



[१७०]

( १ ) **तात** इति जात्यपेक्षया ॥ ( ६ ) **याचध्वं** इति शक्त्यपेक्षया[1] ॥ ( ११ ) **अपचितिं** पूजाम् ॥ ( १४ ) **नियच्छ** निवारय ॥ ( १६ ) **प्रकृष्टतमेन**[2] बहुलतमेन । **क्षत्रियैः** हेतुभिः ॥ ( 1789* ) **धनाध्यक्षः** कुबेरः ॥

[१७१]

( २ ) रोषकृता प्रतिज्ञा **रोषप्रतिज्ञा** । **गर्भः**[3] अरणेः **अग्निः** ॥ ( ३ ) **नालं** न समर्थः ॥ ( ४ ) **स्थाने** युक्तम् ॥ ( ७ ) **पूर्णकोशाः**[4] पूर्णभाण्डागाराः । **परायणं** शरणम् ॥ ( ११ ) **तेनैव** पाप**कर्मणा** ॥ (१३) **समभिवर्तितुं**[5] कर्तुम् ॥ ( २१ ) **वरुणालये** समुद्रे ॥

[१७२]

( ४ ) **मा भाङ्क्षं** मा भञ्जेयम् ॥ ( ८ ) **समापिपयिषुः** समापयितुमिच्छुः ॥ ( ११ ) **अपविघ्नं** विघ्नाभावः[6] ॥ ( १३ ) **शक्त्यवरजाः**[7] शक्तिकनिष्ठाः ॥

[१७३]

( १ ) **राज्ञा कल्माषपादेन गुरौ ब्रह्मविदां वरे ।**

इत्यादेः

( २४ ) **स्वदारे भरतश्रेष्ठ शापदोषसमन्वितः ।**

इत्यन्तस्य ब्रह्मशापस्य दुरतिक्रमणीयता तात्पर्यार्थः ॥ ( २ ) लोकस्येदं **लौक्यम्**[8] । **अगम्या** वसिष्ठाभार्यात्वात्[9] ॥ ( ३ ) **अमित्रसहं**[10] कल्माषपादम् ॥ ( ७ ) **संनादः** नादः[11] ॥

१ C om याचध्वमिति शक्त्यपेक्षया. २ Ed हि प्रकृष्टेन. ३ Ed अग्निः. ४ Ed आपूर्णकोशाः. ५ Ed समतिवर्तितुम्. C समविवर्द्धितुम्. ६ After this Mss ins अपक्रमः तत्रापकार्ये (स्वकार्ये) पितृलक्षणे कोपकरणात्. ७ Ed ये च शक्त्यवराः. ८ Ed लोक्यं. ९ B b शिष्टाभार्यत्वात् (?). C शिष्टभार्या. १० B b मित्रसहः. C कोमित्र° (?). ११ C om संनादो नादः.

[१७४]

(१) **अस्माकमनुरूपो वै यः स्याद्गन्धर्ववेदवित्।**

इत्यादेः

(१२) **मेनिरे सहिता गन्तुं पाञ्चाल्यास्तं स्वयंवरम्।**

इत्यन्तस्य पुरोहितपरिग्रहः तात्पर्यार्थः ॥ (७) **प्रतिजग्राह** स्वीकृतवान् ॥ (८) **आशंसिरे** आशंसां कृतवन्तः ॥ (९) **मातृषष्ठाः** माता षष्ठी येषाम् ॥

[१७५]

(१) **ततस्ते कुरुशार्दूला**[१] **भ्रातरः पञ्च पाण्डवाः।**

इत्यादेः

(अ० १९०–१८) **विजह्रुरिन्द्रप्रतिमा महाबलाः**
**पुरे स**[२] **पाञ्चालनृपस्य तस्य ह।**

इत्यन्तस्य क्षत्रतेजसा[३] सर्वान् दोर्दर्पभूयः(?)[४] अभिभूयै पाञ्चालीं धर्मपत्नीं पाण्डवास्तत्रापि च तदन्तर्गतपञ्चेन्द्रोपाख्यानतात्पर्यभूतेन नारायणमहेश्वरस्थापितेन एकस्याः पञ्चभर्तृत्वलक्षणेन पुराराधेन धर्मेणासादितवन्तः इति तात्पर्यार्थः ॥ (१) **देवमहोत्सवः** स्वयंवरः ॥ (३) **कुतः** कस्मिन्[५] ॥ (५) **भविता** भविष्यति ॥ **माया** मायायुद्धम् ॥ (१६) **वैतालिकाः** मङ्गलपाठकाः। **सूताः** प्रबोधकाः। **मागधाः** स्तुतिपाठकाः। **नियोधकाः** मल्लाः ॥

[१७६]

(३) **क्षयं** गृहम् ॥ (५) **आनुपूर्व्येण** क्रमेण ॥ (६) **स्कन्धावारं** सेनानिवेशम् ॥ (७) **न जज्ञिरे** न ज्ञातवन्तः ॥ (८) **विवृणोति** प्रकाशयति ॥ (९) **अनामय्यं**[६] नामयितुं अशक्यम् ॥ (१०) **वैहायसं** गगनगम् ॥ (१८) **पराार्घ्यागुरुः** कृष्णागुरुः ॥ (२२) **असंबाधः**

१ Ed नरशार्दूला. २ Ed पुरे तु. B b प्रवेश्य. ३ C ज्ञानेन तेजसा. ४ B b दोर्दर्पभुतोभिभुत (?). C दोर्दर्पभूयोभिभूय. ५ After this Mss ins एते श्रूयम्. ६ Ed. अनायम्यं.



असंकटः ॥ (२६) **परार्घ्येषु** उत्कृष्टेषु ॥ (२७) **ऋद्धिं** विभूतिम् ॥ (३०) **वीरकांस्यं** मालाम् ॥ (३४) **खगमैः** शरैः। **दशार्धैः** पञ्चभिः ॥

[१७८]

(३) **संकल्पजेन** कामेन ॥ (१५) **संहननाय** शत्रुवधाय **उपपन्नं** युक्तम् ॥ (१८) **विक्षिप्तवादेषु**[१] विगतक्षेपवादेषु ॥

[१७९]

(२) **उदक्रोशन्** कोलाहलमकुर्वन्। **इन्द्रकेतुः** इन्द्रध्वजः ॥ (६) **अवहास्या** हास्यपात्रम् ॥ (७) **मा गमः**[२] मा गच्छ ॥ (११) **संस्थानचारिषु** मरणधर्मकेषु ॥ (१४) **अभ्याशे** समीपे ॥ (१८) **चेलावधूतं**[३] वस्त्रभ्रमणम्। **हाहाकारान्** अद्भुतजयान् ॥ (१९) **शताङ्गानि** शतभेदानि ॥ (२१) मा जानीरयुरस्मान् जना इति **आवास**गमनकारणम् ॥ (२२) **उत्स्मयन्ती** प्रहर्षन्ती ॥

[१८०]

(३) **वृद्धत्वं** संख्यापेक्षया ॥ (५) **समावाये** समूहे। **संनये** सभायाम् ॥ (१२) **शरावापं** धनुः ॥ (१३) **प्रतीयितुः** संमुखौ बभूवतुः ॥

[१८१]

(४) **शुल्कं** पणः ॥ (१६) **हरिहयः** इन्द्रः ॥ (२०) **विष्ठितो**[४] विशेषेण स्थितः ॥ (२१) **अजय्यं**[५] अजेयम् ॥ (1878*) **प्रकर्षणं** प्रक्षेपणम्। **आकर्षणं** अभिमुखानयनम्। **अभ्याकर्षणं** सर्वतः कर्षणम्। **विकर्षणं** दूरं नीत्वा पुनराकर्षणम् ॥ (२४) **न्यवधीत्** पातयामास ॥ (३१) **अपहारः**[६] निवर्तनसंज्ञा ॥ (1883*) **अत्यन्यान्** अन्यानतिक्रान्तान् ॥ (३६) **क्षतौ** विद्धौ। **विक्षतौ**[७] छिन्नौ ॥

१ Ed निक्षिप्त°. २ Ed गमत्. ३ Ed चेलाविधांस्ततः. ४ Ed निष्ठितः. ५ B असज्जं. b आसज्यं. ६ Ed अवहारं:. ७ Ed परिविक्षतौ.

[१८२]

( १ ) **भार्गवः** कुलालः 'भ्रस्ज् पाके' इत्यस्मात्[1] ॥ ( ५ ) **न उपवर्तेत** न समाक्रामेत् ॥ ( ८ ) **निवेश्यः** विवाह्यः ॥

[१८४]

( ६ ) **संहननेन** दार्ढ्येन ॥ ( ७ ) **अवजह्नुः** नीतवन्तः ॥ ( ९ ) **अगस्त्येन शान्ता**[2] शमिता विन्ध्यवृद्ध्याद्युपद्रवाः । **पुरस्तात्** अग्रतः । **तिरश्च** इति तिर्यक् । **पात्तैः**[3] पश्चानां पादानां प्रति । पाच्छब्दः पादपर्यायः ॥ ( १० ) **पादाः उपधानं** शिरःस्थानं यस्याः । **कुशेषु** कुशशयनेषु । **कृता** स्थापिता ॥ ( ११ ) **पृतनायां** सेनायां **अधिकारः** प्रयोजनं यासाम् ॥ ( १३ ) **वृत्तं** दृष्टचरितम् । पृथग् निवेदितं **कथितम्**[4] ॥ ( १४ ) **अप्रतिविन्दमानः** प्रतिपत्तिरूपं लाभमलभमानः ॥ ( १५ ) **करदेन** सिद्धादायदात्रा । **निदिग्धं** विनिहितम् । **दिग्धं**[5] लिप्तम् ॥ ( १६ ) **सवर्णप्रवरः** अस्मत्समानवर्णज्येष्ठः क्षत्रिय इति यावत् । **उद्रिक्तवर्णः** ब्राह्मणः । **अभिमर्शेन** हरणेन ॥ ( १७ ) **यक्ष्ये** मोदे । **प्रतीतो** हृष्टः ॥

[१८५]

( १ ) **प्रबर्हः** उत्तमः ॥ ( २ ) **व्यायतलोहिताक्षः**[6] विपुले आयते लोहिते अक्षिणी यस्य ॥ ( ३ ) **असज्जमानः** अलग्नः[7] । **वज्री** इन्द्रः । **जुष्टः** सेवितः[8] ॥ ( ५ ) **महीप्ररोहः** वृक्षः ॥ ( ९ ) **परिविश्य**[9] दत्त्वा । **ब्राह्मणसात्** ब्राह्मणवशम् ॥ ( २५ ) सोमस्यापत्यं **सौमकिः** ॥

[१८६]

( १ ) **जन्यार्थं** दुहितुः पत्यर्थम्[10] ॥ ( २ ) **परैत** आगच्छत । **निवेशनं** गृहम् ॥ ( ३ ) **प्रयास्य**[11] प्रस्थाप्य ॥ ( १० ) **गूढोच्चरांसान्**

१ b C om भ्रस्ज् पाके इत्यस्मात्. २ Ed °शाला. ३ Ed पत्तः. ४ C कथयामि. ५ Mss consider also the reading मे न दिग्धं. ६ Ed स्वायत°. ७ C असज्जमानः अस्पर्शनः. ८ C om जुष्टः सेवितः. ९ Ed परिविश्य. १० After this Mss ins नरदेवो राजा. ११ Ed प्रयाप्य. C प्रयास्य.



**मांसलांसान्** ॥ ( १३ ) **उच्चावचं** नानाविधम् ॥ ( १४ ) **सांग्रामिकानि** शस्त्राणि ॥

[१८७]

( १ ) **ब्राह्मेण परिग्रहेण** दक्षिणाङ्गुष्ठप्रग्रहणेन[1] ॥ ( ३ ) **उत** वितर्के ॥ ( ५ ) **संशयस्थान्ते** संशयच्छेदे ॥ ( ७ ) **आस्थास्यामि** आदरं करिष्यामि ॥ ( ८ ) **कामः** इच्छा ॥ ( १० ) **व्येतु** व्यपगच्छतु ॥ ( ११ ) **परायणं** शरणम् ॥ ( २३ ) **अनिविष्टः** अविवाहितः ॥ ( २६ ) **पुंसः** पुमांसः ॥ ( २८ ) **अनुयामहे** अनुगच्छामः ॥

[१८८]

( १ ) **विप्रलब्धे** विरुद्धे ॥ ( ९ ) **व्यवसायं** निश्चयम् ॥ ( १० ) **अभिवर्तेत** अभिगच्छेत् ॥ ( १४ ) **उद्वाहितवती**[2] विवाहितवती ॥

[१८९]

( १-२ ) संयच्छतीति संयत् **यमः** मित्रो रविः तयोरर्थे एको **दीक्षितः** शमित्रः तस्येदं कर्म **शामित्रम्**[3] । **कालातिपातात्** यमातिक्रमात् ॥ ( १० ) **शूरः** समर्थः ॥ ( १३ ) **द्रष्टासि** द्रक्ष्यसि ॥ ( १४ ) **आरात्** समीपे ॥ ( १५ ) **विश्वं** सर्वम् ॥ ( १६ ) **संस्तम्भितः** निःस्पन्दः ॥ ( १७ ) **पर्याप्तं** समाप्तम्[4] । आत्मन्यविद्यमानगुणारोपो **दर्पः** ॥ ( १८ ) **त्रस्तैः** विकलैः ॥ ( १९ ) **विवर्तय** पारय । **बलं** शक्तिः । **वीर्यं**[5] फलपर्यन्ता शक्तिः ॥ ( २१ ) **बाल्यात्** मौर्ख्यात् ॥ ( २२ ) **अभिषङ्गात्** क्रोधात् ॥ ( २३ ) **उग्रं** रुद्रम् । **द्रष्टाशेषस्य**[6] सर्वज्ञः[7] । **भवः** ईशः । **आद्यः** आदौ भवः ॥ ( २४ ) **उग्रवर्चाः**[8] उग्रतेजाः । **एवंशीलाः** साहंकाराः । **भवितारो** बभूवुः भूते[9] भविष्यत्प्रयोगात् । **पुरस्तात्** पूर्वम् । अथवा **एवं भवितार** इत्यस्य त्वत्समा

१ C om दक्षिणाङ्गुष्ठप्रग्रहणेन. २ Ed अध्यासितवती. ३ C सावित्रं. ४ After this B b ins स्पर्धमानः. C ins सुकुमारां. ५ C om from वीर्यं up to शक्तिः. ६ Ed द्रष्टा शेषस्य. ७ After this B b ins अशेषे सर्वत्र. ८ Ed उग्रधन्वा. ९ B b om भूते भविष्यत्प्रयोगात्.

इत्यर्थः ॥ ( २५ ) **अविषह्यं** परेण सोढुमशक्यम् ॥ ( २७ ) **दुराधरो** दुर्लभः । **यत्र** मर्त्यलोके **विहितः** इत्यन्वयः ॥ ( २८ ) **कर्महेतोः**[1] भूभारावतारणहेतोः ॥ ( २९ ) **उग्रधन्वा** पिनाकी ॥ ( ३१ ) **उद्ववर्ह** उद्धृतवान् ॥ ( ३७ ) पृषत्या अपत्यं **पार्षती** द्रौपदी ॥

[ १९० ]

( २ ) **दिष्टस्य** दैवस्य । **ग्रन्थिः** सन्धिः[2] । **कृतं** कर्म । **वर एव एकः हेतुः** ॥ ( ३ ) **नैकान्** अनेकान् ॥ ( ४ ) **यथोपजोषं** यथासुखम् ॥ ( ६ ) **जन्यो** जामाता ॥ ( ८ ) **अजिरं** अङ्गणम् ॥

[ १९१ ]

**( १ ) पाण्डवैः सह संयोगं गतस्य द्रुपदस्य तु ।**

इत्यादेः

**( १९ ) मुदा परमया युक्तो गोविन्दप्रियकाम्यया ।**

इत्यन्तस्य पुरुषधौरेयैः पाण्डवैः सह कृतसंबन्धस्य द्रुपदस्य के नाम भूमिपतयः त्रिलोकीपतेरिन्द्रादपि भयं नास्ति इति स्त्रीरत्नेन कृष्णया च संयुक्तानां पाण्डवानां लक्ष्मीप्रभावोपनीतैर्धनैरहरहः पूर्यन्ते मन्दिराणीति तात्पर्यार्थः ॥ ( ३ ) **क्षौमं** पट्टवस्त्रम् । **कृते कौतुकमङ्गले** यस्याः । **कौतुकं** आश्चर्यम् । **मङ्गलं** शुभम् ॥ ( ६ ) **भद्रा** श्रीः ॥ ( ९ ) **नृपतिं अनु** पश्चात् । **अभिषिच्यस्व** अभिषेकं प्राप्नुहि ॥ ( ११ ) **शरदः**[3] **शतं** वर्षाणां शतम् ॥ ( ११ ) **सूतपुत्रां** जातपुत्राम् ॥ ( १८ ) **अकृतकं** अपद्रव्यहीनम् ॥

[ १९२ ]

**( १ ) ततो राज्ञ[4]श्वरैराप्तैश्चारः समुपनीयत ।**

इत्यादेः

**(२४) नित्यं भवतु ते बुद्धिरेषा राजन् शतं समाः ।**

इत्यन्तस्य द्रौपदीपाणिग्रहणसमये भीमार्जुनयोरद्भुतं कर्म दृष्ट्वा संशयितचेतसां

---

१ Ed कार्यहेतोः. C धर्महेतोः. २ C संबन्धः. ३ Ed शरदां. ४ Ed राज्ञ.



महीभुजां चारद्वारा पाण्डव[1]ज्ञानं तात्पर्यार्थः ॥ ( १ ) **चारो** वार्ता ॥ ( ४ ) **धृतात्मनः**[2] धैर्यस्थापितात्मनः ॥ ( ९ ) **मातुलेन** शकुनिना ॥ ( १२ ) **धरन्ति** जीवन्ति । **हरन्ति** इति यावत् । द्रौपदीमिति शेषः ॥ ( २३ ) **क्षत्तः** हे विदुर । **भवेन** विभूत्या ॥

**( २५ ) ततो दुर्योधनश्चैव राधेयश्च विशांपते ।**

इत्यादेः

**(अ० १९८—६) दिष्ट्या मम महद्[3] दुःखमपनीतं महाद्युते ।**

इत्यन्तस्य दुर्योधनकर्णयोस्तामसं कुलोच्छेदकरं मतमवज्ञाय भीष्मद्रोणयोस्तु तदन्वये विशुद्धं कुरुपाण्डवानां सर्वमहीभुजां च श्रेयस्करं मन्त्रं मधुराभिर्वाग्भिः सोपपत्तिभिर्धृतराष्ट्रं विदुरो ग्राहयामास । गृहीतमन्त्रश्च धृतराष्ट्रः कृतार्थमात्मानं मन्यमानः तदनुष्ठातुं प्रवृत्त इति तात्पर्यार्थः ॥

[१९३]

( १ ) **विवेक्तुं** पृथक्कर्तुम् । **आकारं** भावसूचकं मुखादिविकारम् ॥ ( २ ) **इङ्गितैः** इङ्गितसूचकैर्वागादिविकारैः । लिङ्गैः लिङ्ग्युपचारात् ॥ (४) शोभनं कृतं कर्म येषां तैः **सुकृतैः** । **आप्ताः** तत्त्वज्ञानकारुण्यवन्तः तद्वत्**करणशीलैः** ॥ ( ९ ) **व्युत्थापयन्तु** निन्दन्तु । **बहुत्वात्** पतीनां । यद्येकस्मान्न भिद्येत द्वितीयादेव भिद्येतापीति **सुकरत्वं** उक्तम् ॥ ( 1960* ) **न संमन्यते**[4] न सम्यक्तया गणयति । **तीक्ष्णः** कोपनः । **मूढः**[5] अविवेकः ॥ ( १२ ) **न पादभाक्** न चतुर्थांशभाक् ॥ ( १३ ) **जानमानाः** जानानाः[6] । **भीमसेनं** महीं च । **ऋते** विना । **नशिष्यन्ति** मरणेन पलायनेन वा ॥ ( १४ ) **निबर्हणे** मारणे ॥ (१६) **लोप्त्रहारैः** वल्लीचोरैः ॥ (१७) **पुरा** अग्रतः ॥

[ १९४ ]

( २ ) **सूक्ष्मैः**[7] दुर्विज्ञेयैः । **न क्षताः**[8] न हताः ॥ ( ४ ) **अच्युत** पौरुषादेरचलित ॥ ( ५ ) **दिष्टेन** दैवेन **कृताः** । न विद्यते पुरुष एवेति

---

१ B b पाण्डवतत्त्वज्ञानं. २ Ed महात्मनः. ३ Ed परं. ४ Ed न मन्यते. ५ Ed शूरः ( for मूढः ). ६ B b om जानानाः. ७ B b मू( ? ग्र)ढैः. ८ Ed शकिताः (न क्षताः).

शेषः ॥ (७) **परिद्यूनान्** भैक्ष्यभुजः । **मृजावतो** मृषावतः ॥ (८) **एकस्या बहुभर्तृता स्त्रीणामीप्सितो गुणः** इत्यन्वयः ॥ (९) **आर्यव्रतः** पण्डितव्रतः ॥ (१२) **लघुः** बालः ॥ (२०) मधुरेण **साम्ना** ॥

[ १९५ ]

(१३) **न सकामो** न संपूर्णमनोरथः । **अत्ययं** विनाशं **गतः** इत्यर्थः ॥

[ १९६ ]

(४) **मिथःकृत्यं** वधूवरयोः करणार्हम् । **वृद्धिः** लक्ष्मीवृद्धिः । **त्वत्संयोगोद्भवां** त्वत्तो ब्रूयात् इत्यन्वयः ॥ (७) **शुभ्राणि** निर्दोषाणि ॥ (९) **सान्त्वं** मधुरम् ॥ (१२) **औपयिकं** उचितम् ॥ (१३) **अनन्तरौ** संनिहितौ ॥ (१५) **विधिपूर्वं** विहितम् ॥ (१८) **करणैः** उपकरणैः गजादिभिः । **उच्छ्वास एव परमं** कार्यं यस्य । **अमात्यसंस्थः** अमात्ये परवशः ॥ (१९) **एक एव ईश्वरः** ॥ (२३) **किमन्यद्** बहु कथ्यते । **विहिता** विधिप्राप्ता । **पुरुषेन्द्रता** नरेन्द्रता ॥ (२४) **मिषतः** जीवतः ॥

[ १९७ ]

(६) **अनवमौ** उत्कृष्टौ ॥ (९) **जिह्मं** कुटिलम् ॥ (१०) **मेनाते** मितवन्तौ[३] ॥ (१३) **अन्तरस्थं** भेदस्थम् ॥ (२०) **रामः** बलभद्रः ॥

[ १९८ ]

(७) **ततो जगाम विदुरो धृतराष्ट्रस्य शासनात् ।**

इत्यादेः

(अ० १९९–५०) **ययौ द्वारवतीं राजन् पाण्डवानुमते तदा ।**

इत्यन्तस्य विपाकोन्मुखेन पाण्डवानां धर्मेण त्रिलोकीकर्तुर्नारायणस्यांशं आत्म-

१ Ed आर्यवृत्तः. २ Ed तत्संयोगो°. C त्वत्संशयो°. ३ B b शेनाते गतवन्तौ (?).



सात्कृत्य दुर्योधनादिमतमधरीकृत्य पुरस्कृत्य विदुरमन्त्रं प्रवर्तितो धृतराष्ट्रः पाण्डवान् राज्ये स्थापितवानिति तात्पर्यार्थः ॥ (८) **संयुक्तं** कृतसंबन्धर्म्[१] ॥ (९) **प्रश्नसंविदं** प्रश्नालापम् ॥ (१०) **अनामयं** आरोग्यम् ॥ (१४) **विनयात्[२]** यथार्हायाः प्रवृत्तेः । **प्रसृतं[३]** लज्जादिभिरजडीकृतं यथा भवति ॥ (२०) संबन्धमेव **सांबन्धकर्म्[४]** ॥

[ १९९ ]

(५) **परवन्तः** पराधीनाः ॥ (७) **प्राप्तकालं** उचितम् ॥ (९) **ध्यायति** चिन्तयति ॥ (११) **सविहारं** सक्रीडम् ॥ (१२) **प्रतिग्रहाय** प्रत्युत्थानाय ॥ (१५) **कौतूहलेन** दर्शनेच्छया ॥ (३१) **द्विपक्षानि** च तानि कपाटाभ्यां **गरुडप्रख्यानि** च तानि प्रस्थानकत्वात् ॥ (३२) **बलैः[५]** रक्षिभिः पुरुषैः । बलानां विशेषणं **अभ्यासिकैः** इति । अभ्यस्यन्ते शरादीन्यस्त्राणि येभ्य उपायभूतैः ॥ (३४) **देवताबाधवर्जितं** दैवीभिरापद्भिर्वर्जितम् ॥ (३६) **धनाध्यक्षक्षयोपमं** कुबेरगृहोपमम् ॥ (३७) **भाषा** संस्कृतप्राकृतरूपा नानादेशीया वा ॥ (४४) **जगतिपर्वतैः** क्रीडापर्वतैः ॥ (४६) **बृहन्ति** बहूनि[६] । **महान्ति** महापरिमाणानि[७] ॥ (४७) **पुण्यजनाः** धार्मिकाः । **श्वः श्वः[८]** प्रातः प्रातः ॥ (४८) **धर्मप्रणयनं** धर्मव्यवस्था ॥

[ २०० ]

(१) **एवं संप्राप्य राज्यं तादिन्द्रप्रस्थे तपोधन ।**

इत्यादेः

(अ० २०४–३०) **न चाभिद्यन्त ते सर्वे तदान्योन्येन भारत ।**

इत्यन्तस्य बहूनामेकाङ्गनासंबन्धे सुन्दोपसुन्दोपाख्यानेन प्राणान्तिकं दोषं प्रतिपाद्य 'धर्मो रक्षति रक्षितः'* इति न्यायेन विपाकाभिमुखपाण्डवधर्मप्रेरितेन[९]

१ C कृतसन्धानं युद्धं. २ Ed विनयान्वितः (for विनयात्ततः). ३ Ed प्रश्रितं. ४ Ed संबन्धकम्. ५ Ed तल्पैः. B तलैः (?). ६ After this B ins वर्तुलानि, C ins वर्तुलं. ७ C महाप्रमाणानि. ८ Ed शश्वत्. ९ B °पाकाभिमुखं पाण्डव°. b om from °पाण्डव° up to कारिता.

* Manusmṛti, VIII, 15

तद्दोषप्रतीकारोपायं समयं नारदेन कारिता पाण्डवा इति तात्पर्यार्थः ॥ ( ९ ) **यदृच्छया** मनःप्रवृत्त्या ॥ ( १४ ) **सुसंवीता** सुप्रीता ॥

[ २०१ ]

( २३ ) **ऋते अन्योन्यं** अन्योऽप्रभाविक इति लोभे दोषोऽभूदिति ॥ ( २४ ) **विधानं** प्रतिक्रिया । **वां**[2] युवयोः ॥ ( २९ ) **अकालकौमुदी** अमावास्यादितिथिष्वपि चन्द्रिकां कृतवन्तौ ॥ ( ३१ ) **तलनादितैः** करतालिकादिभिः ॥

[ २०२ ]

( १ ) **उत्सवे** वरदानोत्सवे ॥ ( २३ ) **निवृत्तविपणापणा** निवृत्तो विपणो वणिग्व्यवहारो आपणेषु यस्याम् ॥ (२५) **प्रतिभयाकारं** भयानकम् ॥

[ २०३ ]

( ५ ) **अजाः** अजातजन्मानः ॥ ( १० ) **प्रार्थनीया** लोभनीया ॥ **प्रमदा** प्रकृष्टयौवनमदा ॥ (२२) **प्रत्यवस्थितौ** त्यक्तौ ॥ (२३) **अंचितपक्ष्माग्रं**[3] उन्मीलितं नयनरोमाग्रं यत्र ॥ ( २७ ) **अभिप्रवर्तितं**[4] चलन्तम् ॥

[ २०४ ]

( ९ ) **वेषं** शृङ्गारम् । **आक्षिप्तं** चित्ताक्षेपकम् ॥ ( २२ ) **छन्दिता** लोभिता ॥ ( २३ ) **सुदृष्टां** सुखदृष्टाम् । **तेजसा** हेतुना । दुर्दर्शामिति यावत् ॥

[२०५]

( १ ) **एवं ते समयं कृत्वा न्यवसंस्तत्र पाण्डवाः ।**

इत्यादेः

( अ० २१३–८२ ) **अन्विता राजशार्दूल पाण्डवा मुदमावहन्**[5] **।**

इत्यन्तस्य तीव्रसंयोगाभ्यां आर्तब्राह्मणधनत्राणेन समयपालनलक्षणेन सत्येव(?) च सहकृतो विपाकाभिमुखः पाण्डवानां धर्मः त्रिवर्गसाधनं स्त्रीत्रितयं तासु च अपत्यं स्त्रीसंबन्धिनश्च प्रतिपक्षविजयकारिणः कृष्णबलभद्रप्रभृतीन्सहायानर्जुनस्य नयान् प्रसङ्गेनोपनीतवानिति तात्पर्यार्थः ॥ ( ५ ) **निवेशने**[1] गृहे ॥ ( ८ ) **प्रमत्तस्य** अनवहितस्य । **ध्वाङ्क्षैः** काकैः **हविर्विलुप्यते** । **शार्दूलस्य**[2] **शून्यां गुहां** यथा **क्रोष्टा** शृगालः । इदं तु धर्मापायो वित्तस्य तस्करैर्हरणं तद्ब्राह्मणैरशक्यप्रतिक्रियमिति[3] राज्ञामग्रे निवेद्यत इति भावः ॥ ( ९ ) **हस्तधारणं**[4] मज्जतः समुद्धरणम् ॥ (१४) **उपप्रेक्षणं**[5] उपेक्षा ॥ (१५) **अनास्तिक्यं** अनास्तिकता । **प्रतितिष्ठेत** प्रतिष्ठां गच्छेत् ॥ ( २२ ) **पात्वा**[6] रक्षित्वा ॥ ( २५ ) **गुडाकेशः गुडाकाँ** निद्रा तस्या **ईशः** । अथवा **गुडा** स्नुही तदाकारा **केशा** यस्य ॥ ( २६ ) **व्यलीकं** अपराधः ॥ ( २७ ) **यवीयसः अनुप्रवेशो** विधिलोपकः **गुरोर्नोपघातकः**[8] इत्यन्वयः । खड्गादित्यागदुःखाभावात् । **ज्येष्ठस्य अनुप्रवेशो यवीयसो विधिलोपकः** इत्यन्वयः ॥

[२०६]

( २ ) **चौक्षाः** शुचयः ॥ ( ६ ) **निवेशं** गृहम् ॥

[२०७]

( १० ) **उपावर्तन्त** निवृत्ताः ॥ ( १६ ) **चैत्रवाहिनीं** चित्रवाहनस्यापत्यम् चैत्रवाहिनीम् ॥ (२३) त्रीणि हिमानि यासु ताः **त्रिहिमाः समाः**॥

[२०८]

( ४ ) **विविक्तानि** विजनानि ॥ ( ११ ) **उत्कृष्टः** उद्धृतः ॥ ( १६ ) **अधीयानं** जपन्तम् ॥ ( २० ) **ललमानाः**[9] क्रीडन्त्यः ॥

[२०९]

( ३ ) **प्रलब्धुं**[10] वञ्चायितुम् ॥ ( ५ ) **मैत्रः** सर्वजनसुहृद् ॥ (८)

---

१ C om from यदृच्छया up to ( २०५ ) प्रसङ्गेन उपनीतवानिति तात्पर्यार्थः. २ After वां B ins पुरासं (?). Before वां b ins (या)सां पुरा. ३ Ed अंचितपक्ष्मान्तं. ४ Ed अभिप्रवर्तन्ते. ५ Ed मुदमाप्नुवन्.

१ Ed विशां पते ( for निवेशने ). २ Mss सिंहस्य (for शार्दूलस्य). ३ B °प्रातिक्र(?)य°. C °प्रातिज्ञेय°. ४ Ed अवधारणम्. ५ C उपेक्षणं. ६ Ed पीत्वा. ७ B b om from गुडाका up to तदाकारा. ८ Ed नोपघातः. ९ Ed वै हसन्त्यः ( for ललमानाः ). १० Ed प्रलोब्धुं.

**शतं सहस्रं विश्वं च अक्षयवाचकं परिमाण**वाचकं च । **शतं** समा इत्यत्र **परिमाण**वाचकः शतशब्दः । तेन शतवर्षावधिः शापः इति मा भैष्ट ॥

## [२१०]

( ४ ) **अज्ञातो नाम** अविदितः किल ॥ ( ८ ) **विहृत्य** क्रीडित्वा ॥ ( १६ ) **निष्कुटे** गृहारामे ॥ ( १७ ) **नरेन्द्रमार्गः** राजमार्गः ॥ (१८) **अवलोकने**[1] दर्शने ॥

## [ २११ ]

( २ ) **महे** उत्सवे ॥ ( ३ ) **दीपवृक्षैः** वृक्षाकारैर्दीपाधारैः ॥ (७) **क्षीबो** मत्तः ॥ ( ९ ) **रौक्मिणेयः** प्रद्युम्नः ॥ ( १५ ) **अनेकाग्रमनसं**[2] अन्यमनस्कम्[3] ॥ ( १६ ) **वनेचरस्य** इति सोल्लुंठम् ॥ ( २० ) **आस्थास्यामि** अङ्गीकरिष्यामि ॥ ( २१ ) **संशयितः** संशयवान् किं त्वां वरयेत् अन्यं वा । **अनिमित्ततः** प्रयोजनादिनिमित्तनिरपेक्षत्वात् ॥

## [२१२]

( १ ) **संचारिणा**[4] वार्ताहरेण ॥

## [२१३]

( २९ ) **हरणं** कन्याप्रदेयं धनम् ॥ (३०) **प्रतिग्रहः** प्रत्युत्थानम् ॥ ( ४३ ) **अश्वतरी** वेगयुता ॥ ( ४४ ) **उत्सादनं** उद्वर्तनम् ॥ (2087*) पृष्ठेन वहन्तीति[5] **पृष्ठ्याः** तेषाम् ॥ ( ४६ ) **कृतस्य** घटितस्य । **मुख्यस्य** श्रेष्ठस्य ॥ ( ४८ ) **कृशानां** सपरिकराणाम् । **सादिभिः**[6] आरोहकैः ॥ ( ४९ ) **पादग्रहणकं**[7] पादग्रहणस्येदम् ॥ ( ५१ ) **आविद्धं**[8] कृतसंनाहम् ॥ ( ५३ ) **अमरावासे**[9] स्वर्गे ॥ ( ५४ ) **उत्कृष्टतलनादितैः उत्कृष्टं तलनादितं** करतलध्वानिर्येषु ॥ ( ५८ ) **सौभद्रं** अभिमन्युम् ॥ ( ६१ )

---

१ Ed अवलोकेषु. २ Ed एकाग्रमनसं. ३ C अनन्यमनस्कम्. ४ Ed ततः संवादिते तस्मिन् ( for संचारिणा तु तच्छ्रुत्वा ). ५ C हरन्तीति. ६ Ed हस्त्यारोहैरुपे° ( for सादिभिः समुपे° ). ७ Ed पादग्राहणिकं. C पादग्रहणिकं. ८ Ed आविद्धः. ९ C सुभद्रवासे.



**सात्वत्यां** सुभद्रायाम् । **वा**शब्दः उपमायाम् ॥ (६२) **निष्काः** सुवर्णानि ॥ ( ६५ ) **दशविधं**

> धनुर्गुणः शराश्चैव गुरुशिष्यौ भुजद्वयम् ।
> लक्ष्यं यत्नैकचित्तत्वं दशवैध्यं विदुर्बुधाः ॥

**दिव्यं** पाशुपतादि । **मानुषं** इतरत् ॥ ( ६६ ) अंसबिन्दुकर्परादीनां स्थापनाविशेषः **सौष्ठवम्** ॥ ( ६७ ) **आगमे** धनुःशास्त्रपरिचये । **प्रयोगे** तदर्थानुष्ठाने ॥ ( ६८ ) **संहननं** अस्त्रम् ॥ ( ७२ ) विन्ध्यस्य प्रतिभटः **प्रतिविन्ध्यः** । गवामयनसंज्ञके सत्रे सुते सोमे जात इति **सुतसोमः** ॥ (७३) **आदित्यान्** देवान् ॥

## [२१४]

( १ ) **इन्द्रप्रस्थे वसन्तस्ते जघ्नुरन्यान्नराधिपान् ।**

इत्यादेः आदिपर्वसमाप्तिपर्यन्तस्य तमोमयगुरुतरदुराचारपुरुषसहस्रभारेण निमज्जन्त्या मेदिन्या देवसदसि विज्ञापितो भगवान् कमललोचनस्तद्भारावतारणाय तपस्तेजोमयीं नरनारायणमूर्तिं आत्मनः कौरवयादवकुले किरीटिकृष्णरूपेणावतारितवानिति पुराणरहस्यम् । तत्र भूभारलघूकरणाय खाण्डववननिवासिनो जगद्विरोधिनो महाभूतानुपसंहर्तुं हुतवहेन प्रेरितयोः कृष्णार्जुनयोर्वीर्यपरीक्षा गाण्डीवादिदिव्यशस्त्रप्राप्तिश्च तात्पर्यार्थः ॥ ( २ ) **पुण्ये लक्षणकर्मणी** यस्य धर्मराजस्योपमानम् । **स्वदेहमिव** यथा **देहिनां**[1] स्वदेहस्तथा लोकानां धर्मराजः त्रिवर्गसाधनमिति भावः ॥ ( ३ ) **समं** तुल्यम् । एको ह्यभ्यासेवितो धर्मार्थकामानात्मानमितरौ पीडयति । **त्रीणि चात्मसमान्बन्धून्**[2] इत्युपमानेन तेषामेकस्यापि[3] पीडां न सहत इति विवक्ष्यति ॥

> ( ४ ) **तेषां समविभक्तानां क्षितौ देहवतामिव ।**
> **बभौ धर्मार्थकामानां चतुर्थ इव पार्थिवः ॥**

इति । धर्मादीनां देशकालपात्रक्रमेण पृथक्कृतानां भुवि कृतदेहग्रहणानामिव युधिष्ठिरः **चतुर्थः** तत्पूरणत्वात्तत्पुष्टिहेतुत्वादिति भावः । अथवा **तेषां** अयं

---

१ Ed देहिनः. २ Ed त्रीनिवात्मसमान्. ३ After this B C ins मात्रयापि.

**पार्थिवः** इतरैरर्जितत्वात्[1] तेषामेव **चतुर्थो** मोक्षः । इवशब्दो भिन्नक्रमः **चतुर्थः** इत्यस्यानन्तरं योजनीयः[2] । त्रयाणामेकत्र पक्षपात इति भावः । **बभौ** शुशुभे ॥ ( ५ ) **परं** श्रेष्ठम् ॥ ( ६ ) **अधिष्ठानवती** आश्रयवती । **परायणवती** उत्कृष्टज्ञान[3]वती । **मतिः** निश्चयः । **बन्धुमान्** औदासीन्यद्वेषशून्येन युधिष्ठिरेण अनुरागवता तद्वानित्यर्थः ॥ ( ७ ) **विततो** विस्तारं गतः ॥ ( ९ ) **नेत्राणि** रूपेण । **हृदयानि** गुणैः ॥ ( १० ) **दैवेन** राजाज्ञया[4] । **भावेन** अनुरागेण । भावे हेतुमाह **मनःकान्तं** इति अभिलषितम् ॥ ( ११ ) **अयुक्तं**[5] युक्तिशून्यम् । **असत्यं** वाङ्मनोविसंवादि । **अहितं**[6] अनिष्टपरिणामम् । **विप्रियं** तदात्वयत्योः कटुकम् ॥ (१६) **कुन्तीमातर्** इत्यर्जुनामन्त्रणम् ॥ ( १९ ) **महाधनं** महामूल्यम् ॥

[२१५]

( २ ) **भिक्षे** याचे ॥ [ Appendix I, No. 118 ] (l. 9) **हरिहयः** इन्द्रः । ( l. 36 ) श्रमस्थान् **श्रान्तान्** । ( l. 38 ) **बुद्धिमोहो** बुद्धिविभ्रमः । ( l. 92 ) **विकारः** अग्निमान्द्यम्[6] । ( l. 109 ) **किल्बिषात्** अग्निमान्द्यात् । ( l. 120 ) **प्रहरणानि** अस्त्राणि । ( l. 129 ) **मिषतः** पश्यतः ॥ ( १२ ) **अकामस्य** अनिच्छतः ॥ ( १९ ) **करणानि** उपकरणानि ॥

[ २१६ ]

( १ ) **आदित्यं** अदितेरपत्यम् ॥ ( ३ ) **कापिलक्षणं** कपिकेतुम् ॥ ( ५ ) **सर्वायुधानां महामात्रं** हस्तिनामिव निषेद्धारम् ॥ ( ८ ) **राजतैः** रजताभैः । **गान्धर्वैः** अश्वैः ॥ ( १० ) **भौवनो** विश्वकर्मा ॥ ( १३ ) **सिंहशार्दूलयोर्लक्षणं** इव **लक्षणं** पराक्रमो यस्य ॥ (१७) **जयो**[7] अर्जुनः ॥ ( १८ ) **तदपि** धनुरपि **नमस्कृत्य** इत्यन्वयः । **ज्यया गुणेन** ॥ ( २७ ) **कल्यौ** समर्थौ । **स्वः** भवावः ॥

---

१ b वर्जित°. C वैराजित°. २ C द्रष्टव्यः. ३ C °स्थानवती. ४ b राज्ञा. ५ Ed अनृतं. ६ After this Mss ins अकृतं सहजम्. ७ Ed मुदितोऽर्जुनः ( for मुदितो जयः ).



[ २१७ ]

( ३ ) **छिद्रं** अन्तरम् । **रथयोः** भ्रमतोरलातचक्रयोरिव । **आविद्धौ** भ्राम्यन्तौ ॥ ( ५ ) **निष्टप्ताः** अत्यन्ततप्ताः ॥ ( ९ ) **गतसत्त्वाः** गतजीवाः[1] ॥ ( ११ ) **प्रहसन् कृष्णवर्त्मा** अग्निर्यत्र ॥ ( १६ ) **मानवाः** मनुप्रभवाः ॥ ( १७ ) **हरिवाहनः** इन्द्रः ॥ ( १९ ) **अक्षस्य** रथकाष्ठस्य **मात्रा** प्रमाणं यस्य ॥ ( २२ ) **स्तनयित्नुसमं** घोषवत् ॥

[ २१८ ]

( ३ ) **खगमैः** बाणैः । **अस्यता** क्षिपता ॥ ( ११ ) **जिह्मगामिनं** सर्पम् । **अप्रतिष्ठो** निराश्रयः ॥ ( १९ ) **कृष्णाभ्यां** वासुदेवार्जुनाभ्याम् ॥ ( ३१ ) **शिबिकां** गदाम् । **विचक्रं** शूलम् ॥ ( ३३ ) **अंशः** अर्कविशेषः ॥

[ २१९ ]

( १ ) **तरक्षो**[2] वानराः । **ऋक्षो** भल्लूकाः । **प्रभिन्नाः** समदाः ॥ ( २७ ) **रोधस्सु** तटेषु ॥ ( ३० ) **एकायनगताः** एकमार्गगताः ॥ ( ३१ ) **वसुरेतसः** अग्नेः ॥ ( ३४ ) **सुधां** सुधासदृशं भक्ष्यम् ॥ (३७) **अभिधाव** आगच्छ मां रक्षेत्यभिप्रायः ॥ ( ४० ) **शार्ङ्गकः**[3] खञ्जरीटः ॥

[ २२० ]

( २२ ) **अन्तः** मध्ये धर्षणव्यञ्जनीयेन रूपेण । **गूढः** तिरोहितः ॥ ( २३ ) **एकं** प्राजापत्यम् । **त्रिविधं** गार्हपत्याहवनीयदक्षिणाग्निभेदात् । **अष्टधा** पर्णशालायां[4] सोमवेद्यां उत्तरवेद्यां अग्नीध्रशालायां सदसि क्रतुषु उपसदि लोके चेति ॥ ( २६ ) **विषक्तान्**[5] विलग्नान् । **हायनैः**[6] अर्चिभिः ॥ ( २९ ) **धाता** विश्वधारणात् । **बृहस्पतिः** बृहतां पालनात् । **यमः**[7] आहुत्यादिनियमहेतुत्वात् । **सूर्यः** प्रकाशकत्वात् । **सोमः** ओषधीनां सवनहेतुत्वात् । इल्यत इति इलः प्रेर्य्यः न इलः **अनिलः** ॥

---

१ B b अजीवाः. २ Ed तरक्षृक्ष° ( for तरक्षर्क्ष° ). ३ Mss शारङ्गः. ४ B b पत्नीशालायां. ५ C विविक्तान्. ६ Ed हायनाः. ७ Ed यमो मित्रः ( for यमः सूर्यः ).

[ २२१ ]

( १ ) **शुक्रे** अग्नौ ॥ ( २ ) **निशाम्य** ज्ञात्वा । **तपस्विनी** दीना ॥ (३) **कक्षं** वनम् ॥ ( ४ ) **कर्शयन्ति**[1] कृश् तनूकरणे चिन्तया तनूकुर्वन्ति । **कर्षयन्ति** पाठे कृष् विलेखनधातौ विलेखयन्ति पक्षपुटविलेखने पक्षे इत्यर्थः । **अबर्हाः** अपक्षाः । **पूर्वेषां** पितृपितामहादीनां मध्ये । **नः परायणं** नः शरणमस्तीति ॥ ( ५ ) **निःसरितुं**[2] गन्तुम् । **अन्ततः**[3] अग्निछेदस्थाने ॥ ( ७ ) **किं कृत्वा मे** मम **कृतं** सुकृतं **स्यात्** इत्यन्वयः । **नु** वितर्के ॥ ( ८-९ ) **जरितारिसारिसृक्क**[4]**स्तम्बमित्रद्रोण**नाम्नः चतुरः पुत्रान् कर्मभिर्माता शोचति । **निर्घृणो** निष्कृपः ॥ ( १२ ) **पत** गच्छ[5] ॥ ( १३ ) **क्षमं** उचितम् ॥ ( १७ ) **विहर्तुं** अपनेतुम् ॥ ( १९ ) **मोघो** निष्फलः । **धरेत**[6] धारयेत् ॥ ( २१ ) **शिष्टैः**[7] मन्वादिभिः । **दिष्टं** उपदिष्टम् ॥

[ २२२ ]

( ३ ) **वायोः** सकाशात् ॥ (४) **चर** गच्छ । **वेत्स्यसि** लप्स्यसे ॥ ( ७ ) **निरमित्रः** निःसपत्नः । **हिरण्मयः** सुवर्णमयः ज्ञानमयो वा ॥ (१४) ( १४ ) **एषणे** अन्वेषणे ॥

[ २२३ ]

( ७ ) आत्मेव **आत्मा** सखा शरीरं वा । **योनिः** कारणम् । **वीरुधः** लतायाः ॥ ( ९ ) **प्रपन्ना** गता ॥ (१०) **हेतयः** विशः । **ईडितः** स्तुतः॥ ( ११ ) **तमसे**[8] तमोनिवृत्तये । **गोषु** रश्मिषु ॥ ( १४ ) **प्रतिष्ठा** प्रलयस्थानम् ॥ ( १६ ) **विश्वान्** सर्वान् । **सृष्ट्या वृष्ट्या** सृष्टिरूपया वृष्ट्या । **भावयासि** उत्पादयासि ॥ ( १७ ) सम्यग्द्रवन्ति गच्छन्ति आपोऽस्मिन्निति **समुद्रः** । समुत्क्लेदयन्तीति[10] वा ॥ ( १९ ) **परेण प्रेहि** अन्यतो गच्छ ॥ ( २३ ) **ब्रह्मन्** त्वम् ॥

---

१ Ed कर्षयन्ति. २ Ed सरितुं. ३ Ed अन्यतः. ४ Ed सारिसृक. ५ B b यात गच्छत. ६ Ed ध्रियेत. ७ Ed शिष्टादिष्टः ( for शिष्टैः दिष्टं ). ८ Ed परिघां. ९ Ed तूपसे. १० C संचलान्ति क्लेदयान्ति इति वा ( पाठे ?).



[ २२४ ]

( २ ) **प्लवने** उत्पतने ॥ ( ११ ) **अमित्रां**[1] सपत्नीम् ॥ ( १९) **अश्रद्धेयं**[2] असंभाव्यम् ॥ ( २६ ) **पुरुषान्तरात्** पुरुषव्यवधानात् ॥

[ २२५ ]

( ६ ) **कुल्या** अल्पा कृत्रिमा सरित् ॥ श्वेतकेरेव* **श्वेतकेतुः** इति नाम ॥

तदिदमादिपर्व । आदिपर्वसंज्ञाबर्जि च इदम् । जायते अस्ति विपरिणमते विवर्धते अपक्षीयते विनश्यतीति षण्णां भावविकाराणां आदिभूतो जन्मलक्षणो विकारः स चात्र संभवोपाख्याने पाण्डवकौरवाणां कथानायकप्रतिनायकानां साकल्येन प्रतिपादितः । तदुपलक्षिताः धर्मार्थकाममोक्षाः सोपायाः आदिशब्देन व्यपदिश्यन्ते यथा एकेन छत्रेणोपलक्षिताः छत्रविरहिता अपि छत्रिणो गच्छन्तीति व्यपदिश्यन्ते । अथ वा समासव्यासाभ्यां प्रतिपाद्यमानो ह्यर्थः सुप्रतिपादितो भवति । तत्र आदिः समासः । तत्पूर्वकत्वादुत्तरो व्यासः । तस्मात्समस्तजयेतिहाससमासत्वादिदमादिपर्व । ये तु प्रथमभावित्वादस्यादिपर्वत्वं वर्णयन्ति ते द्वितीयतृतीयसंज्ञामुत्तरोत्तरपर्वणामपि विदधीरन् । अर्थोपलक्षणनिमित्ता सभापर्वादिसंज्ञा । तस्मादर्थनिबन्धना एव संज्ञा श्रेयसी । पर्वशब्दप्रवृत्तिश्चात्र पुण्यहेतुत्वात् । पौर्णमास्यादिषु यथा । न च पुण्यहेतुषु तीर्थादिष्वतिप्रसङ्गः शङ्कनीयः। योगस्यातिव्यापकत्वेऽपि वृद्धप्रसिद्धेर्नियामकत्वात् । वृद्धाश्च व्यासवैशंपायनादयोऽत्र पर्वशब्दं प्रयुञ्जते । तस्मात्कालविशेषवदयं[3] नावभासः पर्वशब्दः । तस्मात् पुण्यविशेषार्थिना इहापि ब्रह्मयज्ञश्रवणादयो विधेयाः । तत्त्वज्ञानार्थिना तु सर्वमन्यत्परित्यज्यास्मिन्नितिहासे प्रवर्तितव्यम् । दृष्टो हि तस्यार्थः तत्त्वावबोधनमिति[4] न्यायात् । अयममावास्यादिपर्वभ्यो विशेषः । यदिदं धर्मार्थकाममोक्षरहस्यप्रतिपादकत्वादुपनिषदपीति । एषामष्टादशपर्वणां चैकत्वे भेदे च अर्थैकत्वभेदौ कारणम् । तथा हि आदिसभावनप्रभृतिरर्थोपाधिरेषामेकत्वे कारणम् । स एव परस्परापेक्षया वर्तमानः पर्वभेदः भेदे कारणम् । एवमध्यायानामप्येकत्वभेदाभ्यां

---

१ Ed अमित्रीं. २ Ed अश्रद्धेयतमं. ३ Mss °विशेषनादिदं (!). ४ b तत्त्वावरोधन°.

* Ed. Appendix I, 121, line 7

निपुणेन[1] भवितव्यम् । ‘अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागः स्यात्’ इति न्यायात् । येषु पुनरध्यायेषु निपुणतरमवधानैरपि नार्थभेदाभेदौ दृश्येते तेषु भेदाभेदयोर्फलभेदाभेदौ कारणम् । तथा हि कस्मिंश्चिदध्याये पठिते कपिलादानफलं कस्मिंश्चिद्वाजपेयफलमिति । तद्भेदाभेदाभ्यामध्यायभेदाभेदावध्यवसातव्यौ ॥

आवृण्वन्व्योमवीथीः खरतुहिनकरौ वेगवापौ(प्यां?) विवर्तौ[2]
निर्वाप्य द्योतमानो निजनखरुचिभिर्भासयन्भूर्भुवः स्वः ।
आमर्त्यादावसत्याः प्रथमचरमदिग्भित्तिकूलंकषोऽङ्घ्रिः
पायान्नारायणीयश्चिरचकितचरस्यास्तु.... प्रदो वः[3] ॥

इति श्रीपरमहंसपरिव्राजकाचार्यभट्टारकश्रीमत्सत्यबोधाशिष्यस्य परमहंस-
परिव्राजकाचार्यश्रीदेवबोधकृतौ महाभारततात्पर्यटीकायां
ज्ञानदीपिकायामादिपर्व समाप्तम् ॥ शुभमस्तु ॥

१ Mss °भेदयोर्निपुणेन. २ b वेरामात्या विवर्ते (?). ३ B C °तरस्यास्य मामीप्रघोषः (?).
४ After this B ins चतुर्दशशती ज्ञानदीपिकायामनुष्टुभाम् ॥ १४०० ॥ नारायणं° नमस्कृत्य° ॥



## APPENDIX

Additional matter in Śāradā script found in Ms. C. *

[ ६५ ]

( ३४ ) मह्यं **क्रुद्धः** त्रिशंकुपातेन **नक्षत्रसंपदा** **अतिशयितानि** प्राचीन-**नक्षत्रवंशात्**[1] प्रतिपत्तिरूपाणि **श्रवणनक्ष** ... ... चरं सृष्ट्वा **तत्पूर्वाणि यः ससर्ज** इत्यन्वयः ॥

[ ६८ ]

( ४ ) **शिखरिभिः** शिखरसदृशैः ।

पक्वदाडिमबीजांतं(लं?) माणिक्यं शिखरं विदुः ।

मत्वर्थीय इन् । उपमेयतया तस्य समृद्धित्वं विवक्षितम् ।

दाडिमाफलसंकाशे दशने शिखरं विदुः ।

शिखरं लम्बितमाणिक्यम् । तथा च अनेकार्थे

पक्वदाडिमबीजांतं(?) माणिक्यं शिखरं विदुः ।

इति एतच्चायुक्तमेव ।

‘कुन्दकुड्मलं शिखरम्’ इति तु श्रीभोजः । दन्तानां कुन्दकुड्मलानां च सर्वदा सितत्वमेव इति कण्ठालंकारविदः ।

तस्मात् (?) शिखरदशना इति तीक्ष्णाग्रदन्ताः । एतच्च दशनानां शुभं लक्षणम् । सु...... स्वादात् । तथा च पराशरसंहितायां ‘समसितशिखरिणश्च दशना’ इति ॥ ( २१ ) **संरंभः** क्रोधः । तेन **अमर्षः** अक्षमा ॥

* These additions are made in the upper, lower and side margins on the following folios of Ms. C :— 22, 34, 35, 36, 37, 38, 39, 40, 42, 43, 44, 45 and 48. In this appendix also the *pratīkas* are printed in black type and adhyāya and śloka numbers from the Critical Edition of the Mbh. published by B. O. R. I. are adopted. In some places, where the *pratīkas* have not been originally given, they are supplied in brackets.

१ Ed नक्षत्रवंशात्.

[१२२]

( १२ ) **वीटा** कन्दुकसदृशं अश्मकवर्णम् (?) कन्दुकं वीटेति गम्यते ॥
( 1358* ) **तेषां तु क्रीडमानानाम्** इति ।

**तेषां तु[1] क्रीडमानानामुदपानेऽङ्गुलीयकम् ।**
**(१३) पपात धर्मराजस्य वीटा तत्रैव चापतत्[2] ॥**

इति ।

[१२५]

( २७ ) **निष्पेषः** अशनिध्वनिः ।

[१२६]

( ४ ) **द्युतिकान्तिदीप्तिभिः[3]** प्रकाशकमनीयभास्वरताभिः ॥ ( ५ ) **कनकतालः** तरुविशेषः ॥ ( ३७ ) **वृषः** कर्णः ॥

[१२७]

( १ ) **अधिरथः** अत्र कर्णपिता । **प्राणः** बलम् ॥ ( २ ) ( **पितृ-गौरवयन्त्रितः** ) यंत्रवशात् .... ... ॥ ( ५ ) **कर्णं सूतं विजानन्ति** ॥ (११) **क्षेत्रबन्धुना** अधमेनापि ॥ ( १४ ) **आगमितं** श्रुतम् ॥ (२४) **निःश्रमः** अत्यभ्यासः ॥

[१२९]

( १५ ) **दायाद्यं** रिक्थम् ॥

[१३०]

(५)( **अपक्रष्टुं** ) राज्यादपकर्ष्य व्यावयितुम् ॥ (६) **भृताः** पुष्टाः ॥ (१८) **परे** शत्रौ । **प्रच्छन्नं यतः** यत्नवान् ॥

[१३१]

( १५ ) **न प्रसहिष्यति** न बाधिष्यते ॥

---

१ Ed संक्रीडमानानां. २ Ed पपात कूपे सा वीटा तेषां वै क्रीडतां तदा. ३ Ed दीप्तिकान्तिद्युतिगुणैः.



[१३३]

वारणावते जतुगृहं गत्वा पाण्डवा दग्धव्या इति पुरोचनादिभिः समं ... ... राज्ये प्रस्थापिताः ॥

**(१८) पौरेषु तु निवृत्तेषु विदुरः सर्वधर्मवित् ।**
**बोधयन्पाण्डवश्रेष्ठमिदं वचनमब्रवीत् ॥**

अस्यार्थः । **पौरजनेषु** अन्तिके यात्रां कृत्वा **विनिवृत्तेषु** रहः समासाद्य **विदुरः पाण्डवश्रेष्ठं** युधिष्ठिरं **इदं वचनं** (1458*) '**यो जानाति**' इत्यादि वक्ष्यमाणं **अब्रवीत्** । किंभूतं वाक्यम् । संज्ञापनरूपम् । **इदं वचनं** इति पदसंज्ञापने पौराणिकसिद्धम् । तथा च ब्रह्मवैवर्ते ।

इदं वचनमुक्त्वा च वाक्यं वाक्यविशारदः ।
चकारावश्यकं सर्वं नर्मदातीरमाश्रितः ॥

इति । **बोधयन्** अवहितं कुर्वन् । **सर्वधर्मवित्** सकलनीतिधर्मवित् ।

**प्राज्ञः प्राज्ञं प्रलापज्ञं[1] सम्यग्धर्मार्थदर्शिवान् ।**

**प्राज्ञः** प्रस्तुतकार्यवेत्ता विदुरः । **प्राज्ञं** झटिति परोक्तवाक्यार्थमिदं युधिष्ठिरम् । **प्रलापज्ञं** सर्वदेशभाषाप्रलापज्ञम् । तथाविधमेव **अब्रवीत्** इत्यर्थः ॥

**(1458*) यो जानाति परप्रज्ञां नीतिशास्त्रानुसारिणीम् ।**
**( १९ ) विज्ञायेदं[2] तथा कुर्यादापदं निस्तरेद्यथा ।**

**इदं** संज्ञापनवाक्यम् । **यः** पुमान् अन्यस्य वक्तुः वचनार्थपरामर्ष ... प्रज्ञामेति प्रायेण यदुक्त ... **जानाति** । **नीतिशास्त्रानुसारिणीं** इति कर्तव्याकर्तव्य-निश्चय ...... शास्त्राणि विशालादीनि तदनुसारिणीं तत्संबद्धां नीतिशास्त्रानु-संबद्धार्थज्ञानस्यानुयोगात् । **विज्ञायेदं तथा कुर्यात्** । तान् **विज्ञाय इह** जगति पुरुषः **तथा कुर्यात्** निर्गतं अनिर्गतं वा तथाप्रकारं कुर्यात् यथासावापदमात्मनो .... .... दिति .... नित्याविरुद्धप्रत्याय .... .... निश्चितमापन्नः स्यादित्यर्थः ॥

---

१ Ed प्रलापज्ञः. २ Ed इदम्.

(२०) **कक्षघ्नः** वह्निः वनेचरादिश्च । **महाकक्षे** महावने । **स न दहेत्** न व्यापादयेत् । कान् । **बिलौकसः** सर्पनकुलमूषकादीन् । इत्यतो हेतोः चशब्देन ........ सत्यं च नेति । **आत्मानं** स्वशरीरम् । **यो रक्षति स जीवति** वासगृहे बिलं कर्तुम् ॥

जतुगृहान्निर्गमनेऽपि वयं दुर्योधनपक्षीयैरवश्यं व्यापादितव्याः तत्र प्रतिक्रिया । तत्राह ।

**(२१) नाचक्षुर्वेत्ति पन्थानं नाचक्षुर्विन्दते दिशः ।**
**नाधृतिर्भूतिमाप्नोति बुध्यस्वैतत्तु[1] बोधितः ॥**

**अचक्षुः** चारशून्यः । **न पन्थानं** जानाति । अतो वारणावतं गत्वा निर्गमनप्रवेशादिकं पथज्ञानं कर्तव्यम् । **न अधृतिः** इति । योऽतिधैर्ययुक्तो दुःखसहः स **भूतिं** सम्यग् **आप्नोति** नान्यः । तस्माद्दुर्गभंगादिना यद्दुःखं तत् सोढव्यं न तु तत्र निर्वेदः कार्यः ॥

किंमिति पलायितव्यं तत्रैव किमिति न स्थीयते । तत्राह (२२) **अनाप्तैर्दत्तं** इति । **अनाप्तैः** पुरोचनादिभिः । **दत्तं अलोहजं शस्त्रं** युक्तं **आदत्ते** स्वीकरोति पुरुषः शत्रोरकीर्ति ..... र्थसुप्रतीकारस्यान्यतः सिद्धत्वात् ॥

**महाकच्छे बिलौकसः** इति यदुक्तं तत्र दृष्टान्तमाह (२२) **श्वावित्** इत्यादि गतार्थम् । यदि वा प्रतीकारं कृत्वापि न स्थेयं तत्र न बत सारभा ....त्कि तर्हि कर्तव्यम् । **श्वाविच्छरणं** इति दुर्गं महद् **आसाद्य प्रमुच्येत** महाभयात् । उक्तं च

श्वाविच्छरणमन्विच्छेच्छत्रुभिः परिवारितः ।

इत्यर्थः ॥

**नाचक्षुः** इति यदुक्तं तत्र दिङ्मुखज्ञानार्थमाह ।

चरन्मार्गान्विजानाति (दिवा) नक्षत्रैर्विन्दते दिशः (निशासु) ।

इति ॥

**नाधृतिर्भूतिमाप्नोति** इति स्फुटयति ।

**(२३) आत्मना चात्मनः पञ्च पीडयन्नानुपीड्यते ।**

1 Ed बुध्यस्वैवं प्रबोधितः.



**आत्मना** स्वयमेव । **पञ्च आत्मनः** भूतानि । **पीडयन्** दुःखयन् । **नानुपीड्यते** कार्यवशेन संजातत्वादित्यर्थः ॥

[१३८]

(११) जलं तिष्ठत्यस्मिन्निति **जलस्थायः** जलाशयः ॥ (२५) **चैत्यः** देवाङ्कितवृक्षः । **चैत्यः** बद्धवेदिकः । पूज्यो वृक्षः तदुक्तः **चैत्यः** ॥

[१४३]

**(३४) घटः अस्य उत्कचः(?) इति[1] मातरं प्रत्यभाषत[2] ।**
**अब्रवीत्तेन[3] नामास्य घटोत्कच इति स्म ह ॥**

**घट** इवोह्यते तर्क्यते स्थूलमध्यो दीर्घग्रीवः **उत्कचः** ऊर्ध्वसमुद्गकचः **इति मातरं** हिडिम्बां भीमसेन उक्तवान् । अनयैव व्युत्पत्त्या माता **अस्य नाम अब्रवीत्** इत्यर्थः । अथवा घटन्तीव चलन्तीव उह्यन्ते अस्योर्ध्वकचा इति **घटोत्कच** इति॥

[१४६]

(१) विद्यामधीत इति **वैद्यः** ॥

[१५५]

(५) **अभितः** सर्वतः ॥ (७) **शाम्यन्तौ** विषयेभ्यो निवर्तमानौ । **शाम्यन्तौ** समयुक्तौ ॥ (८) **तारणं** कार्यान्तकरणम् ॥ (९) **उपह्वरे** एकान्ते । 'रहोऽन्तिकमुपह्वरे' इत्यमरः* ॥ (११) **अर्बुदं** कोटिशतम् । इदं तु चिन्त्यम् (?)॥ (१६) **संकरस्य** दोषयुक्तस्य वा । (**असांप्रतम्**) 'युक्ते द्वे सांप्रतं स्थाने' इत्यमरः‡ ॥

[१६०]

(५) **त्रिः**[4] त्रीन् वारान् ॥ (२६) (**क्षुपः**) 'ह्रस्वशाखाशिफः क्षुपः' इत्यमरः** ॥

1 Ed घटभासोत्कच इति. 2 Ed सोऽभ्यभाषत. 3 Ed अभवत्तेन. 4 Ed यद्वचः (for त्रिर्वचः).
* Amarakośa III. 3. 183. ‡ Amarakośa III. 4. 11. ** Amarakośa II. 4. 8.

[१६४]

( ३ ) एतद् **नाम** कथयते । **श्रोतुं इच्छामि** इति ॥ (५) **तपसा** इति । **कामक्रोधौ** वासयति स्वचरणयोः इति **वासिष्ठः** इति निरुक्त्यर्थः । **संवाहनं** मर्दनम् ॥ ( १४ ) **ब्रह्म कार्यं** उत्पादनम् ॥

[१७६]

( ३० ) **वीरकांस्यं** पीतभाण्डं पुष्पपात्री वा । **वीरकांस्यं** स्वयंवरार्थे मालास्थापनं भाजनम् । **समलंकृतं** माल्यम् ॥

[१७८]

( ९ ) **पश्च** पाण्डवान् । **अभिपद्मान्** पद्मवनाभिमुखानिव **गजेन्द्रान्** ॥ ( ११ ) अद्रौ पद्माभिमुखत्वेन **व्यायच्छमानाः** प्रयत्नवन्तः **ददृशुः** ॥

[१७९]

( ११ ) **संस्थानं** शरीरं संनिवेशः तेन **चरत्सु** तद्वत्सु शरीरिषु मध्ये इत्यर्थः ॥ ( १३ ) **सुखं .... यत् महत्** महद्धेतुः .... न्तीत्यन्वयः ॥ ( १४ ) **विलपतां** इति .... .... षष्ठी ॥ ( १५ ) **परिक्रम्य** गत्वा ॥ ( २१ ) **आवासमेवोपजगाम** अन्यथा संततानां प्रततस्थे .... .... स्यात् सर्वार्थान् । तयोश्च रक्षार्थं भीमार्जुनावेव चात्र पर्याप्तौ ॥

[१८०]

( ७ ) **बुभूषति** अङ्गीकरोति ॥ ( १८ ) **तालमात्रं** ऊर्ध्वबाहुस्थित-पुरुषप्रमाणं तालतरुतुल्यं वा ॥

[१८१]

( ३१ ) (**अपहारः**[१]) 'अपहारस्त्वपचयः' इत्यमरः* । हानिरित्यर्थः ॥

---

१ Ed अवहारः.

* Amarakośa III. 2. 16.



[१८४]

( १७ ) **प्रतीतः**[१] प्रहृष्टः ॥

[१८७]

( १८ ) ( **ब्राह्मेण परिग्रहेण** दक्षिणाङ्गुष्ठप्रग्रहणेन । ) तथा च स्मृतिः।

एकैकस्याथ विप्रस्य गृहीत्वाङ्गुष्ठमादरात् ।
अमुकामुकगोत्रैतत् तुभ्यमन्नं स्वधा नमः ॥†

[१८९]

( २३ ) **शेषस्य** शापान्तस्य ॥

[१९१]

( ३ ) ( **कृतकौतुकमङ्गला** )

तद्राक्षसात्त(?)सिद्धार्थशिखिपक्षोरगत्वचः ।
कंकाणौषधयश्चैव कौतुकाख्याः प्रकीर्तिताः ॥

तद्राक्षः(?) श्वेतगुग्गुलुः । **मङ्गलानि** शङ्खध्वन्यादीनि ॥

[१९३]

( १६ ) **लोप्त्रं** चौरसमृद्धिद्रव्यम् ॥

[२०१]

(२९) **कौमुदी** कार्तिकमासीय उत्सवः । **अकाले** एव **चक्रतुः** इत्यर्थः ॥

[२०२]

( ८ ) सरस्वत्या भूषणानि(?) **नागाः** ॥

[२१३][२]

( ४४ ) ( **उत्सादनं** ) 'उद्वर्तनोत्सादने द्वे' इत्यमरः* ॥

---

१ Ed परमप्रतीतः. २ Ed अ० २०४–२ (?).

† A quotation from Brahmapurāṇa; also given by Aparārka in his commentary of Yājñavalkyasmṛti (ācārādhyāya).

* Amarakośa II 6. 121.